अवभृथ निचुङ्कुण निचेरुरसि निचुङ्कुणो,   गृहं गृहो,—ऽव नो देवैर्देवकृतमेनो यक्ष्य,—व
मर्त्यैर्मर्त्यकृतं चिकित्वो,—ऽनुरोरा नो देव रिषस्पाहि,—प्सु धौतस्य ते देव सोमनृभिष्टुतस्य यस्ते
गोमन्निर्भक्षो यो अश्वसानिस्तस्य ता उपहूता उपहूतस्य भक्षयामि,   विचृत्तो वरुणस्य पाशः,
प्रत्यस्तो वरुणस्य पाशो,   नमो वरुणस्य पाशायो,—ऽतवेशीयो ना उन्नुधाभिः ॥ ११९

उदुत्ते मधुमत्तमा गिर स्तोमास ईरते ।
सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथा इव ॥ १२०
कण्वा इव भृगवः सूर्या इव विश्वमिद्धितमानशुः ।
उदेतः प्रजामुत वर्चो दधाना युष्मान् राय उत यज्ञा असश्चतः ॥ १२१
गायत्रं छन्दो अनु संरभध्वमथा स्यात सुरभयो गृहेषु ।
एधोऽस्येधिषीमहि समिदसि समेधिषीमहि ॥ १२२
अपो अद्यान्वचारिषं रसेन समसृक्ष्महि ।
पयस्वानग्न आगमं तं मा संसृज वर्चसा ॥ ३९ ॥ १२३ [९८५]

॥ इति प्रथमकाण्डे महो नाम तृतीयः प्रपाठकः ॥ ३ ॥

अथ चतुर्थः प्रपाठकः ।

## यजमान-ब्राह्मणम् ।

ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम । १
मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेम ॥
अग्ने व्रतपते व्रतमालप्स्ये,   तच्चे प्रब्रूमस्त्वं,—ऽग्नो गोपाय,   तञ्छकेयम् ॥ २
अग्निं होतारमुप तं हुवे देवान् यज्ञियानिह यान्यजामहे ।
आयन्तु देवा हविषो मे अस्य देवो यन्तु सुमनस्यमानाः ॥ ३
पुनर्जिम त्वा ब्रह्मणा दैव्येन हव्यायास्मै वोढवे जातवेदः ।
इन्धानास्त्वा सुप्रजसः सुवीरा ज्योग्जीवेम बलिहृतो वयं ते ॥ ४

---

[१] मै १,४,५ । मै १,५,१०,३; १,६,१-४ । काठ. ४,१४, ५,१-४ । श. १,५, १,६८,१०, १८,७६ ।

अस्मास्विन्द्र इन्द्रियं दधात्वस्मान् रायो मघवानः सचन्ताम् ।
अस्माकꣳ सन्त्वाशिषः ॥ ५

आमाशिषो दोहकामा इन्द्रवन्तो हवामहे । धुक्षीमहि प्रजामिषम् ॥ ६

सा मे सत्याशीर्देवान् गम्याज्जुष्टाज्जुष्टतरा पण्यात् पण्यतरा ॥ ७

अरेडता मनसा देवान् गछ, यज्ञो देवान् गछतु, यज्ञो देवान् गम्यात् ॥ ८

वि ते मुञ्चामि रशनाꣳ वि रश्मीन् वि योक्त्राणि परिचर्तनानि ।
धत्तादस्मभ्यं द्रविणेह भद्रं प्र मा ब्रूताद्भागधां देवतासु ॥ ९

इष्टो यज्ञो भृगुभिर्द्रविणोदा यतिभिराशीर्दा वसुभिः ।
अङ्गिरसो मे अस्य यज्ञस्य प्रातरनुवाकैरहुषुः ॥ १०

तस्य मा यज्ञस्येष्टस्य वीतस्य द्रविणेहागम्या,—द्वसुर्यज्ञो, वसुमान्यज्ञ,—स्तस्य मा यज्ञस्य
वसोर्वसुमतो वस्विहागछत्व,—दो मागछत्व,—दो मागम्यात् ॥ १ ॥ ११

सꣳ यज्ञपतिराशिषा, सदसि, सन्मे भूयाः, पूर्णमसि, पूर्णं मे भूयाः, सर्वमसि,
सर्वं मे भूयाः, अक्षितमस्य,—क्षितं मे भूयाः, प्राच्या दिशा देवा ऋत्विजो मार्जयन्तां,
दक्षिणया दिशा मासाः पितरो मार्जयन्तां, प्रतीच्या दिशा गृहाः पशवो मार्जयन्ता,—मुदीच्या
दिशाप ओषधयो वनस्पतयो मार्जयन्ता,—मूर्ध्वया दिशा यज्ञः संवत्सरो मार्जयताꣳ, विष्णुः
पृथिव्याꣳ व्यक्रꣳस्त गायत्रेण छन्दसा, निर्भक्तः स यं द्विष्मो, विष्णुरन्तरिक्षे व्यक्रꣳस्त
त्रैष्टुभेन छन्दसा, निर्भक्तः स यं द्विष्मो, विष्णुर्दिवि व्यक्रꣳस्त जागतेन छन्दसा, निर्भक्तः
स यं द्विष्मो, ऽगन्म३ स्वः, सं ज्योतिषाभूम,—देमहममुष्य प्राणं निवेष्टयामि, तेजोऽसि,
समहं प्रजया, सं मया प्रजा, समहं पशुभिः, सं मया पशवो, ऽग्ने गृहपते सुगृहपतिरहं
त्वया गृहपतिना भूयासꣳ, सुगृहपतिस्त्वं मया गृहपतिना भूया, अस्थूरिणौ गार्हपत्यं दिदा-
ऽशतꣳ हिमा द्वायू, राधाꣳसि संपृचानो असंपृचानो तन्वो, ऽसा अनु मा तन्व,—द्विश्वो
दिव्यस्तन्तु,—र्मा मानुषश्छेदि, दिव्याद्धाम्नो मा छित्सि मा मानुषा,—ज्ज्योतिषे तन्तवे त्वा ॥
॥ २ ॥ १२

[७] मै १,४,६,७ । तै १,६,५-६ । का ५,५ । श ६,१० ७,५५,६७ । काण्व ६,११, ७,४६-४७,४९-५० ।
मा श्रौ १,४,३ ७,३,६ । बा आ ३,७,४,१०-१६ ।

ये देवा यज्ञहनः पृथिव्यामध्यासते । अग्निर्नस्तेभ्यो रक्षतु गछेम सुकृतो वयम् ॥ १३
ये देवा यज्ञमुषः पृथिव्यामध्यासते । अग्निर्नस्तेभ्यो रक्षतु गछेम सुकृतो वयम् ॥ १४
यास्ते रात्रयः सवितर्देवयानीः सहस्रयज्ञमभि संबभूवुः ।
गृहैश्च सर्वैः प्रजयान्वग्रे स्वो रुहाणास्तरता रजांसि ॥ १५
ये देवा यज्ञहनो अन्तरिक्षे अध्यासते ।
वायुर्नस्तेभ्यो रक्षतु गछेम सुकृतो वयम् ॥ १६
ये देवा यज्ञमुषो अन्तरिक्षे अध्यासते । वायुर्नस्तेभ्यो रक्षतु गछेम सुकृतो वयम् ॥ १७
अगन्म मित्रावरुणा वरेण रात्रीणां भागो युवयोर्यो अस्ति ।
नाकं गृभ्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः ॥ १८
ये देवा यज्ञहनो दिव्यध्यासते । सूर्यो नस्तेभ्यो रक्षतु गछेम सुकृतो वयम् ॥ १९
ये देवा यज्ञमुषो दिव्यध्यासते । सूर्यो नस्तेभ्यो रक्षतु गछेम सुकृतो वयम् ॥ २०
येनेन्द्राय समभरन् पयांस्युत्तमेन हविषा जातवेदः ।
तेनाग्ने त्वमुत वर्धया मां सजातानां मध्ये श्रैष्ठ्या आ धेहि मा ॥ २१
वेदोऽसि, वेदो मा आभर, तृप्तोऽहं, तृप्तस्त्वम् ॥ २२
घृतवन्तं कुलायिनं रायस्पोषं सहस्रिणम् । वेदो वाजं ददातु मे ॥ २३
निर्द्विषन्तं निररातिं दह, रुद्रास्त्वायच्छन्, —ऽऽदित्यास्त्वास्तृणन् ॥ २४
गोमां अग्नेऽविमं अश्वी यज्ञो नृवत्सखा सदमिदप्रमृष्यः ।
इडावानेषो असुर प्रजावान् दीर्घो रयिः पृथुबुध्नः सभावान् ॥ २५
यौ पत्नी पत्या सुकृतेषु गछतां यज्ञस्य युक्तौ धुर्या अभूताम् ॥ २६
आपृणानौ विजहता अरातिं दिवि ज्योतिरुत्तममारभेथां स्वाहा ॥ २७
पत्नि पत्न्येष ते लोको, नमस्ते अस्तु, मा मा हिंसीः, —या सरस्वती वेशयमनी तस्यै
स्वाहा ॥ २८
या सरस्वती वेशभगीना तस्यास्ते भक्तिवानो भूयास्म ॥ २९
अग्नेऽस्यनभिशस्तिश्च सत्यमित्त्वमया असि ।
अयाः सन् मनसा कृत्तोऽयाः सन् हव्यमूहिषेऽया नो धेहि भेषजं स्वाहा ॥ ३ ॥ ३०

[ ३ ] तै. १,४,८ । तै. ३,७,४; १,६,६,४ । काठ. ५,६,४ । वा. १५,५०; १,६१; ४,९ । वा० १६,७०; ४,११ । मा. सं. १,४,३,१; १,१,५ । । गोमं ( मौ ) अंग्नेऽविमं ( मौ ) । ऋ. ४,२,५ ]

देवान्जनमगन्यज्ञ,—स्ततो मा यज्ञस्याशीरागछतु, पितॄन् जनमगन्यज्ञ,—स्ततो मा यज्ञस्याशीरागछतु, मनुष्यान्जनमगन्यज्ञ,—स्ततो मा यज्ञस्याशीरागछत्व,—प ओषधीर्वनस्पतीन्जनमगन्यज्ञ,—स्ततो मा यज्ञस्याशीरागछतु, पञ्चजनं जनमगन्यज्ञ,—स्ततो मा यज्ञस्याशीरागछतु, पञ्चानां त्वा वातानां धर्त्राय गृह्णामि, पञ्चानां त्वा दिशां धर्त्राय गृह्णामि, पञ्चानां त्वा सलिलानां धर्त्राय गृह्णामि, पञ्चानां त्वा पृष्ठानां धर्त्राय गृह्णामि, पञ्चानां त्वा पञ्चजनानां धर्त्राय गृह्णामि, चरोस्त्वा पञ्चबिलस्य धर्त्राय गृह्णामि ॥ ३१

धामासि प्रियं देवानामनाधृष्टं देवयजनम् । देववीत्यै त्वा गृह्णामि ॥ ३२

भूरस्माकं, हव्यं देवानामा,—ऽऽशिषो यजमानस्य, देवताभ्यस्त्वा देवताभिर्गृह्णामि४।३३

समृतयज्ञो वा एष यद्दर्शपूर्णमासौ, कस्य वाह यक्ष्यमाणस्य देवता यज्ञमागच्छन्ति कस्य वा न, बहूनां समानमहं यजमानानां यः पूर्वेद्युरग्निं गृह्णाति स श्वो भूते देवता अभियजते, ममाग्ने वर्चो विहवेष्वस्त्वि,—ति पूर्वमग्निं गृह्णाति, देवता वा एतत् पूर्वेद्युरग्रहीत, ताः श्वो भूतेऽभियजते, बर्हिषा वै पूर्णमासे व्रतमुपयन्ति वत्सैरमावास्यायां, पुरा वत्सानामपाकर्तोर्दम्पत्योरश्नीयातां, हस्ता अवनिज्य दक्षिणतोऽग्निमुपतिष्ठेता,—ऽग्ने व्रतपते व्रतमालप्स्या, इत्यग्निर्वै देवानां व्रतपतिर्ब्राह्मणो व्रतभृद्, व्रतपतय एव प्रोच्य व्रतमालभते, ऽग्निं होतारमुप तं हुवा, इति येन हविर्निर्वप्स्यन्त्स्यात्तदभिमृशेद्, देवतानां वा एष ग्रहो, देवता वा एतदग्रही,—युनज्मि त्वा ब्रह्मणा दैव्येने,—ति परिधिषु परिधीयमानेषु वदेद्,—ष वा एष योगो, ऽग्निमेतद्युनक्ति, युक्तोऽस्मै हव्यं वहत्य,—स्मास्विन्द्र इन्द्रियं दधाति,—तीडायामुपहूयमानायां वदेदि,—डाया वा एष दोहा, इडां वा एतद्दुहे, ऽथो इन्द्रियं वा इडे,—न्द्रियमेवात्मन्धत्ता, आमाशिषो दोहकामा, इत्याशिषो वै दोहकामा यजमानमभिसर्पन्ति, ता दक्षिणतो यजमानलोकमुपतिष्ठन्ते, ता यथा धेनवोऽदुग्धा अपक्रामन्त्येवमस्मादाशिषोऽदुग्धा अपक्रामन्ति य एवं न वेदा,—ऽथ य एवं वेदाशिष एव दुहे, सा मे सत्याशीर्देवान् गम्यादि,—ति प्रस्तरे प्रह्रियमाणे वदेत्, सत्यां वा एतदाशिषं देवान् गमयित्वाथ वरं वृणीत, एतद्ध स्म वा आहौपावृज्जानः श्रुतेहं, सहस्रेणेष्ट्वा कस्मै पीदतोऽधि वरं वरिष्यामहा, इति सहस्रेण यक्षीये,—ति ह स्म वाव ततः पुराह, विं ते मुञ्चामि रशनां वि रश्मीनि,—ति परिधिषु प्रह्रियमाणेषु

[ ४ ] मै १,४,१ । तै १,६,१ । काठ. ५,६ । ■ ८,६०, १,३१ । कात्य ९,३६ १,६९ । मा श्रौ १,४,१ ।
[ ५ ] मै. १,४,१ । तै १,६,७, १,७,४,२ । काठ ३१,१५, ३०,०-२ ।

यदेद्, देवता वा एतत् स्वर्गं लोकं गमयित्वा प्रतिष्ठाप्य न्यमौग्,—इष्टो यज्ञो भृगुभिरिति, यज्ञस्य वा एष दोहो, यज्ञमेवदुह, एतद्ध स्म वा आह कपिवनो भौवायनः, किमु स यज्ञेन यजेत यो गामिव यज्ञं न दुहित, सुदोहतरो हि गोरिति ॥५॥ ३४

स२ यज्ञपतिरार्धि,—येति यजमानो यजमानभागं प्राश्नाति, यजमानो वै यज्ञपति,—र्यज्ञो यजमानभागो, यद्यजमानो यजमानभागं प्राश्नाति यज्ञपता एव यज्ञं प्रतिष्ठापयति, यदि प्रवसेत्तसिमिष्टयजुषा सह जुहुया,—दुमा एव यज्ञं प्रतिष्ठापयति, यद्धविर्निर्वप्स्यन्नग्नौ निष्टपत्य-मेरेव यज्ञं निर्मिमीते, ऽथ यद्धविर्निर्वप्स्यन्यजमानाय प्राह यज्ञपतेरेवाधि यज्ञं निर्मिमीते, ऽश्विर्य भूमा४सं प्रदहत्ये,—त२ वै लोके२ यजमानोऽन्वतिमुच्यते यदेता आपोऽतिसृज्यन्ते, ऽछिन्न२ स्रावयितव्या, अद्भिर्वा एतद्यजमानोऽग्नेरात्मानमन्तर्धत्ते, द्वया वै देवा यजमानस्य गृहमागच्छन्ति सोमपा अन्येऽसोमपा अन्ये हुतादोऽन्येऽहुतादोऽन्ये, एते वै देवा आहुतादो यद्ब्राह्मणं, एतद्देवत्य एष यः पुरानीजान, एते वा एतस्य प्रजायाः पशूनामीशते२; तेऽस्याः प्रीता इषमूर्जमादायापक्रामन्ति, यदन्वाहार्यमन्वाहरति तानेव तेन प्रीणाति, दक्षिणतः-सद्भ्यः परिहर्तवा आह, दक्षिणावतैव यज्ञेन यजता, आहुतिभिरेव देवान् हुतादः प्रीणाति, तेऽस्मै प्रीता इषमूर्जं नियच्छन्ति ॥ ६ ॥ ३५

संदृसि, संन्मे भूया, इत्याशिषो वा एता,—स्ता एवावरुन्धे, पूर्णमसि, पूर्णं मे भूया, इति पूर्णो ह वा अमुत्राग्निः संभवति, सर्वमसि, सर्वं मे भूया, इति सर्वो ह वा अमुत्राग्निः संभवत्य,—क्षितमस्य,—क्षितं मे भूया, इत्यक्षितो ह वा अमुत्राग्निः संभवति, प्राच्या दिशा देवा ऋत्विजो मार्जयन्तामि,—त्येता वै यज्ञस्य मृष्टय, एताः शान्तयस्ता, यज्ञवापयो त्रिदामक्र१,—स्तेषां मृष्टो यज्ञः शान्तो मूर्धधातुकः पशुपतिः पशू२,—स्तद्य एवं२ वेद मृष्ट एवास्य यज्ञः शान्तो भवत्य,—धातुकः पशुपतिः पशून्, विष्णुः पृथिव्या१ व्यक्र१स्त गायत्रेण छन्दसे,—ति विष्णुमुखा वै देवा असुरानेभ्यो लोकेभ्यः प्रणुद्य स्वर्गं लोकमाय१स्ते,—विष्णुमुखो वा एतद्यजमानो भ्रातृव्यमेभ्यो लोकेभ्यः प्रणुद्य स्वर्गं लोकमेत्य,—गन्म३ स्वरि,—ति स्वर्गमेव लोकमेति, सं ज्योतिषाभू,—मेति ज्योतिर्हि स्वर्गो लोकं, इदमहममुष्य प्राणं निर्वेष्ट-

[६] मै. १,४,३ । तै. १,७,३ । क. ६,१० । कपि. ५,१२ ।
[७] मै. १,४,३ । तै. १,७,५-६ । कठ. ३१,५ । श. १,९४,६३ । काण्व. ४,४६,४७,४९,५० ।

यामी,—ति प्राणमेवास्य निवेष्टयती,—त्यं पर्यावर्तत, एवं हि यज्ञः पर्यावर्तत, ऽस्या अमुष्य या एतदादित्यस्यावृतमनु पर्यावर्तते, तेजोऽसी,—त्याह, तेजो३ह्यग्निः, स चैव हित्वा प्रजां च पशूँश्च स्वरेति, यदाह, संमहं प्रजया, सं मया प्रजा, संमहं पशुभिः, सं मया पशव, इति प्रजायां चैव पशुषु च प्रतितिष्ठत्य,—ग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासं, सुगृहपतिस्त्वं मया गृहपतिना भूया, इत्ययंग्रहणौ संजीर्यतः, सर्वमायुरितो, नार्तिं नीतः, पुत्रस्य नाम गृह्णाति, प्रजामेवानु संमतानीत्, स वै मानुषमेवाभ्युपावर्तते, मनुष्यस्य हि नाम गृह्णाति, यदाहाच्छिन्नो दिव्यस्तन्तुरसौ मानुषश्छे,—दीति दिव्यं चैव मानुषं च संमतानीद्, दिव्याद्धाम्नो मा च्छित्सि मा मानुषा,—दित्युभा इमं लोकं जयतः, सह स्वर्गे लोके भवतः ॥ ७ ॥ ३६

इति य एव देवा यज्ञहनश्च यज्ञमुषश्च पृथिव्यां ताँस्तीर्त्वान्तरिक्षमारुहद्, य एव देवा यज्ञहनश्च यज्ञमुषश्चान्तरिक्षे ताँस्तीर्त्वा दिवमगन्, य एव देवा यज्ञहनश्च यज्ञमुषश्च दिवि ताँस्तीर्त्वा सुजातानां मध्ये श्रैष्ठ्या आधादेनं, शिरो वा एतद्यज्ञस्य यत्पुरोडाशः, केशा वेदो, यद्वेदेन पुरोडाशं संमार्ष्टि यज्ञस्य सर्वत्वायाथो मेध्यत्वाय, यज्ञो वै देवेभ्यस्तिरोऽभवत्, तं देवा वेदेनाविन्दं,—स्तद्वेदस्य वेदत्वं, यद्वेदेन वेद्यामास्ते यज्ञमेवास्मै विन्दति, पत्न्यै वेदं प्रयच्छति, दुरनुवेदो वा अमुत्र यज्ञो, यज्ञमेवास्मै विन्दति, त्रिः प्रयच्छति, त्रिपरया हि देवा, उपस्था आस्यते, पुमांसं जानुका भवति, पशवो वै वेदं, ओषधयो३ ग्रर्प, एष खलु वै पशूनां लोको यदन्तरार्ग्नी, स्वे वा एतं लोके यजमानो भ्रातृव्यस्य पशून् वृङ्क्ते, ऽर्धमासेऽर्धमासे वै यज्ञो विच्छिद्यते, संततमाहवनीयात् स्तृणन्नेति यज्ञस्य संतत्यै, तं संततमुत्तरेऽर्धमा३सेऽभियजते, गोमं अग्नेऽविमं अश्वी यज्ञ, इति गोमन्तमेवाविमन्तमश्विनं यज्ञमकरि,—डावानेषो असुर प्रजावान् दीर्घो रयिः पृथुबुध्नः सभावा,—नित्याशिषमेवाशास्ते, या पत्नी पत्या सुकृतेषु गच्छतामित्येषा वै पत्न्या यज्ञस्यान्वारम्भः, सह स्वर्गे लोके भवतो, या वा एतस्य पत्नी सैतं संप्रति पश्चादन्वास्ते, यत् संप्रति पश्चादन्वासीत प्रजामस्या निर्दहेद्, यदाह पत्नि पत्न्येष ते लोकः, इति लोकमेवास्या अक,—निर्दाहुकाऽस्याः प्रजा भवति, या सरस्वती वेशयमनी,—ति वेशयमनं, वेशानेवास्मै तेन यच्छति,—तस्योर्जीरन्तः सज्ञाता उपासते, या चामिन्द्रस्य ब्राह्मणस्य वा राजन्यस्य वोपास्महा, इति माऽसं तु न पनेयु,—

[८] मै. १,४,३ । ऐ. ३,५,४ । मै श्र ३,१०,११ । काठ ३१,४,६ । (गोमां अग्ने) ऋ. ४,२,५ ।

स्तस्मिन्नग्नौ यत् पचेयुः क्रव्यादं कुर्यु,—र्न हि तस्मिन्नग्नौ मांसं पचन्ति यस्मिन्नाहुतीर्जुहुत्य,—या-
ग्नेऽस्यनभिशस्ति,—रग्नेरयया वै नामैषाग्नेः प्रिया तनू,—रया मर्यादिर्येणे,—ति खलु वा आहु,—
र्यच्चयातु यज्ञे क्रियते यच्च न, या चैवातु यज्ञस्य प्रायश्चित्तिं विद्म याँ च न तस्यैषोभयस्य
प्रायश्चित्तिः ॥ ८ ॥ ३७

देवान् जनमगन्यज्ञ, इति स्कन्नमभिमन्त्रयेत, जनं वा एतद्यज्ञस्य गच्छति यत् स्कन्दति,
जनो३ ह्ययमस्मदधि, यज्ञस्य वा एतज्जनं गतस्याशिषमवरुन्धे, पञ्चानां त्वा वातानां धर्त्राय
गृह्णामीति, पाङ्क्तो यज्ञो, यावानेव यज्ञस्तमालभ्या,—ऽयं वाव यः पवत एष यज्ञ,—स्तमेवाग्र-
हीत, पञ्चानां त्वा दिशां धर्त्राय गृह्णामी,—ती मा एव पञ्च दिशोऽग्रहीत, पञ्चानां त्वा सलि-
लानां धर्त्राय गृह्णामीति, पशवो वै सलिलं, पशूनेवाग्रहीत, पञ्चानां त्वा पृष्ठानां धर्त्राय
गृह्णामी,—ति पृष्ठान्येवाग्रहीत, तेनास्य पृष्ठवन्तौ दर्शपूर्णमासौ संतता अविच्छिन्नौ भवतः,
पञ्चानां त्वा पञ्चजनानां धर्त्राय गृह्णामीति, छन्दांसि वै पञ्च पञ्चजना,—श्छन्दांस्येवाग्र-
ही,—च्चरोस्त्वा पञ्चबिलस्य धर्त्राय गृह्णामी,—ती मे वै लोकाश्चरुः पञ्चबिल, इमानेव लोकान-
ग्रहीत् ॥ ३८

धामासि प्रियं देवानामनाधृष्टं देवयजनम् । देवताभ्यस्त्वा गृह्णामि ॥ ३९

इति मन्त्रात आज्यग्रहः पृथागाद्, भूरस्माकं, हव्यं देवोता, माशिषो यजमानस्यै,—ति
भूतिमेवात्मन आशास्ते, हव्यं देवेभ्य, आशिषो यजमानस्य, देवताभ्यस्त्वा देवताभिर्गृह्णा-
मी,—ति देवताभ्य एवैनं देवताभिरग्रहीत् ॥९॥ ४०

देवताना वा एतदायतनं यदाहवनीयो, यदन्तराग्नी तत् पशूनां, मनुष्याणां गार्हपत्यः,
पितॄणामोदनः पचनः, सर्वा ह वा अस्य यक्ष्यमाणस्य देवता यज्ञमागच्छन्ति य एवं वेद, पूर्वं
प्राग्निमपरं च परिस्तरीतवा आह, मनुष्याणां वै नवावसानं, प्रियं नवावसानमेवाक्रमेध्य-
स्याग्ना,—ऽग्नेर्जिह्वासि वाचो विसर्जन,—मिति पुरोडाशस्थानावपति, देवतानां वा एष ग्रहो,
देवता वा एतद्ग्रही,—देतद्ध स्म वा आहारुण औपवेशि,—रहुतासु वा आहमाहुतिषु देवता हव्यं
गमयामि, मंस्थितेन यज्ञेन मंस्थां गच्छामी,—ति य एवं वेदाहुतास्वेवास्याहुतिषु देवता
हव्यं गच्छति मंस्थितेन यज्ञेन मंस्थां गच्छत्यो,—ष्ठलोम्या वै दृषदा हविष्कृदेहि ॥ इति

[ ९ ] मै १,४,४ । काठ ३१,६ । क. १,३६ । तैत्ति २,४९ । मा. श्रौ. १,२ ।
[ १० ] मै १,६,८ । काठ ३१,७ । क. १,६५ । कात्या. १,९३ ।

देवा यज्ञाद्रक्षाꣳस्यपाघ्नत यदौलूखलो उद्वादयन्ति दृषदौ समाघ्नन्ति ॥ हविष्कृदेहि ॥ इत्याह
रक्षसामपहत्या, अपः प्रणीय वाचꣳ यच्छति, मनसा वै प्रजापतिर्यज्ञमतनु,—तौलूखलयोरुद्व-
दितोरध्वर्युश्च यजमानश्च वाचꣳ यच्छेतां, प्रजापतिरेव भूत्वा मनसा यज्ञं तन्वाते, न सर्वाणि
सह यज्ञायुधानि प्रहृत्यानि, मानुषं तत् क्रियते, नैकमेकं, पितृदेवत्यं तद्, द्वे द्वे सह
प्रहृत्ये, याज्यानुवाक्ययो रूपमुपवसत्यु,—मयाꣳस्त्वेन पशूनवरुन्धे ग्राम्याꣳश्चारण्याꣳश्च,
यद्ग्राम्यस्य नाश्नाति तेन ग्राम्यानवरुन्धे, ऽथ यदारण्यस्याश्नाति तेनारण्या,—नेशो इन्द्रियꣳ वा
आरण्य,—मिन्द्रियमेवात्मन्धत्ते, न माषाणामश्नीयाद,—यज्ञिया वै माषा, न तस्य साय-
मश्नीयाद्यस्य प्रातर्यक्ष्यमाणः स्याद,—प्रतिजग्धेन वै देवा हव्येन वसीयोभूयमगच्छन् प्रतिजग्धेनासुराः
पराभवꣳस्त,—दप्रतिजग्धेन वा एतद्धव्येन यजमानो वसीयोभूयं गच्छति, परास्य भ्रातृव्यो
भवति, यो वै श्रद्धामनालभ्य यजते पापीयान् भवत्या,—ऽऽपो वै श्रद्धा, न वाचा वदन्ति न
यजुषा,—ऽति वा एतां वाचं वदन्त्यति यत्र, मनस्तु नातिवदन्ति, यद्यपो गृह्णीयाद्द्विमा तर्हि
मनसा ध्याये,—द्विपꣳ वा एतासां पात्रम,—नयैवैना अग्रहीत्, श्रद्धामालभ्य यजते, न
पापीयान् भवति ॥१०॥ ४१-४४

ब्रह्मवादिनो वदन्ति, अग्र इध्ममुक्षन्ति प्र हवि,—रिध्मः प्रथम आहुतीनां, कस्मादन्येषाꣳ
हविषाꣳ याज्यानुवाक्याः सन्ति, कस्मादिध्मस्य नेति ॥ अग्नये समिध्यमानायानुब्रूहि ॥ इति
पुरोनुवाक्या सामिधेनी,—र्याज्योपवाको वषट्कारो, यत्र वै यज्ञस्यातिरिक्तं क्रियते तद्यजमानस्याति-
रिक्तमात्मन् जायते, यदनाप्तꣳ वै यज्ञश्छिद्यते क्षोधुको यजमानो भवति, परिधानीयया सामि-
धेनीनामुत्तममिध्मस्य समर्धय,—त्यक्षोधुको यजमानो भवति, नास्यातिरिक्तमात्मन् जायते, यो
वै प्रजापतिꣳ सप्तदशꣳ यज्ञेऽन्वायत्तं वेद नास्य यज्ञो व्यथते, प्रजापतौ यज्ञेन प्रतितिष्ठति ॥
ओ श्रावय ॥ इति चतुरक्षरम् ॥ अस्तु श्रौषट् ॥ इति चतुरक्षरम् ॥ यज ॥ इति द्व्यक्षरम् ॥ ये यजा-
महे ॥ इति पञ्चाक्षरं, द्व्यक्षरो वषट्कार, एष वै प्रजापतिः सप्तदशो यज्ञेऽन्वायत्तो, यद्यनुवा-
क्याया एति यदि याज्याया, अन्तरेवेति नास्य यज्ञो व्यथते, प्रजापतौ यज्ञेन प्रति-
तिष्ठति, न वै तद्विद्म यदि ब्राह्मणा वा स्मोऽब्राह्मणा वा यदि तस्य वा ऋषेः स्मोऽन्यस्य
वा यस्य ब्रूमहे, यस्य इत्येव ब्रुवाणो यजते न तदिदमागच्छति, नेतरमुपनमति, नत्र प्रवरं
प्रवर्यमाणे ब्रूयात् ॥ देवाः पितरः पितरो देवा, योऽस्मि स सन्यजे, योऽस्मि स सन्करोमि,

[ ११ ] तै १.६.११

शुनं म इष्टꣳ शुनꣳ शान्तꣳ शुनं कृतं भूयात् ॥ इति तद्य एवं वेद स संन्यञ्जते वै तदिष्टमाग-
च्छति, नैतदुपनमति ॥ यज्ञस्य त्वा प्रमयाभिमया परिमयोन्मया परि गृह्णामि ॥ इति गायत्री वै
यज्ञस्य प्रमा, त्रिष्टुबभिमा, जगती परिमा,—ऽनुष्टुबु,—न्मैतानि वै छन्दाꣳसि यज्ञꣳ वहन्ति,
तैरेवैनं परिगृह्णाति ॥११॥ ४५--५९

केशिनꣳ दार्भ्यं गन्धर्वाप्सरसोऽपृच्छन्, कथा यजमानो यजमानेन भ्रातृव्येण सदृङ्ङसी,—
त्यहꣳ वेद, इत्यब्रवीत्, तेऽब्रुवन्,—ह्वा नो यज्ञꣳ व्याचक्ष्व, इति तेभ्यो यज्ञꣳ व्याचष्ट,
तेऽब्रुवन्,—तेनेन यजमानो यजमानाद् भ्रातृव्यात् पापीयान्त्स्यादिति, तेऽब्रुवꣳ,—स्तथा वै ते
यज्ञꣳ विधास्यामो यथा यजमानो यजमानं भ्रातृव्यमभिभविष्यसी,—ति तस्मा आहुतीर्यज्ञꣳ
व्यदधु,—स्ततः केशी पण्डिकमौद्वारिमभ्यभव,—दभि भ्रातृव्यꣳ यज्ञेन भवति य एवꣳ वेद,
प्राणो वा आघारः, पूर्वार्धे होतव्यो, मुखत एवास्य प्राणं दधाति, प्राणो वा आघारो,
मध्यतो होतव्यो, मध्यत एवास्य प्राणं दधात्या,—ऽऽघारं भूयिष्ठमाहुतीनां जुहुयात्, प्राणो वा
आघारः, प्राणमेवास्य भूयिष्ठं करोति, संततमाघारमाघारयेत्,— प्राणो वा आघारः,
प्राणस्य संतत्या, ऊर्ध्वमाघारमाघारयेत् स्वर्गकामस्य, यजमानो वा आघारो, यज-
मानमेव स्वर्गं लोकं गमयति, यं द्विष्यात्तस्य न्यञ्चमाघारयेत्, पापीयान् भवत्य,—भिक्रामन्ती
वा एकाहुति,—रपक्रामन्त्येका, प्रतिष्ठितैका, यामभिक्रामं जुहोति साभिक्रामन्ती, यामप-
क्रामं जुहोति सापक्रामन्ती, याꣳ समानत्र तिष्ठन् जुहोति सा प्रतिष्ठिता, यं कामयेता,—ऽभि-
तरꣳ वसीयाञ्छ्रेयान् त्स्या,—दिति तस्याभिक्रामं जुहुयात्, तेन सोऽभितरꣳ वसीयाञ्छ्रेयान्
भवत्य,—थ यं कामयेता,—पतरं पापीयान् त्स्यादिति, तस्यापक्रामं जुहुयात्, तेन सोऽपतरं
पापीयान् भवत्य,—थ यं कामयेत, न वसीयान् त्स्यान्न पापीयानिति, तस्य समानत्र तिष्ठन् जुहु-
यात्,—तेन स न वसीयान्न पापीयान् भवत्य,—ते वै प्रयाजाः, समानत्र होतव्या ऋतूनां प्रति-
ष्ठित्यै, यामितो ज्यभागस्य सोत्तरार्धे होतव्या, ततो योत्तरा सा रक्षोदेवत्या, या सोम-
स्याज्यभागस्य सा दक्षिणार्धे होतव्या, ततो या दक्षिणा सा पितृदेवत्या,—तद्वा अन्तराहुती-
नां लोकः, कल्पा अस्याहुतयो यथापूर्वꣳ ह्रियन्ते य एवꣳ वेद, यां धूमे जुहोति तां तमसि
जुहोति, ततो यजमानोऽरोचुको भवति, यामङ्गारेषु जुहोति सान्धाहुति,—स्ततो यजमानस्य

---

[१०] १ १६३१ १,७१।

चक्षुः प्रमायुकं भवत्यु,—ग्नें ज्योतिष्मति होतव्ये, ऽरोचुको यजमानो भवति, नास्य चक्षुः प्रमीयते, यामंब्राह्मणः प्राश्नाति सा स्कन्नाहुति,—स्तस्या वसिष्ठ एवं प्रायश्चित्तिं विदांचकार ॥ मधु पाहि ॥ इति पुरोडाशमभिमृशेद्, भजतां भागी, मा भागो भक्त, ब्राह्मणानामिदं हविः सोम्यानां सोमपानां, नेहाब्राह्मणस्याप्यस्ति, कुर्वतो मे मा क्षेष्ट, ददतो मे मोपदसत् ॥ इति दक्षिणीयेष्वेवं यज्ञे प्रतिष्ठापयत्यस्कन्नमविक्षुब्ध,—मुतं यामंब्राह्मणः प्राश्नाति सास्य हुतैव भवति ॥ १२ ॥ ६०-६३

यस्याज्यमनुत्पूतं स्कन्दति सा वै चित्रा नामाहुति,—स्ततो यजमानस्य चित्रं प्रमायुकं भवति, चित्रं देयं, सैव तस्य प्रायश्चित्ति,—रथ यस्योत्पूतं स्कन्दति सा वै स्कन्ना नामाहुति,—स्ततो यजमानः प्रमायुको भवति, वरो देयः, सैव तस्य प्रायश्चित्ति,—रथ यस्य पुरोडाशौ दुःशृतौ भवतस्तद्धविर्यमदेवत्यं, यदा तद्धविः संतिष्ठेताथ चतुःशरावमोदनं पक्त्वा ब्राह्मणेभ्यो श्रीव [illegible] —रथ यस्य पुरोडाशौ क्षायतस्त्वं यज्ञं वरुणो गृह्णाति, [illegible] यज्ञो हि यज्ञस्य प्रायश्चित्ति,—रथ योऽदक्षिणेन यज्ञेन यजते तं यजमानं निधा,—दक्षिणेन हि वा अयं यज्ञेन यजते, ऽथ न वसीयान् भवती,—त्युर्वरा समृद्धा देयात्, सैव तस्य प्रायश्चित्ति,—रथ यस्य कपालं भिद्येत तत् संदध्याद्, गायत्र्या त्वा शताक्षरया संदधामि ॥ इति वाग्वै गायत्री शताक्षरा, वाचैवैनत् संदधात्य,—थ यस्य कपालं नश्यति तं वा इयं स्वर्गाल्लोकादन्तर्दधाति, यदा तद्धविः संतिष्ठेताथाग्नये वैश्वानराय द्वादशकपालं निर्वपे,—दियं वा अग्निर्वैश्वानर, इमामेव भागधेयेनोपासरत् स्वर्गस्य लोकस्यानन्तर्हित्या, अथ यस्याहुतिर्बहिष्परिधि स्कन्दति सा वै जीवनडाहुति,—रग्नीध्रं भूयात् ॥ एवां संकुष्य जुहुधि ॥ इत्यग्निर्वै सर्वा देवताः, सर्वाभिरेवास्य देवताभिर्हुतं भवति, पूर्णपात्रमग्नीधे देयं, सैव तस्य प्रायश्चित्ति,—र्यजमानो वै जुहू,—र्भ्रातृव्य उपभृ,—द्यं प्रक्षिणेदेव होतव्यं, यत् प्रक्षिणीयाद्यजमानं प्रक्षिणीयाद्, व्यृषतेव होतव्यं, देवपात्रं वा एता यदाहुतयो, यं द्विष्यात्तं तर्हि मनसा ध्यायेद्, देवपात्रैरेवैनं विपृणाति, स्तृणुत एवं, पशवो वा आहुतयो रुद्रोऽग्निः स्विष्टकृ,—द्यं सह होतव्यं, यत् सह जुहुयाद्रुद्रायास्य पशूनपिदध्या,

[ १३ ] मा० श्रौ० ३ १ ।

—दुत्तरार्धे पूर्वार्धे होत३व्यमाहुतीनामसꣳसृष्ट्या, अथो एवमस्य रुद्रः पशूननभिमानुको भवति
॥१३॥ ६४–६७

आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासा आलप्स्यमानोऽग्निर्वै सर्वा देवता विष्णुर्यज्ञो,
देवताश्चैव यज्ञं चालभ्य दर्शपूर्णमासा आलभते, जयान्त्सो जुहोति, देवाश्च वा असुराश्चास्प-
र्धन्त, स प्रजापतिरेतान् जयानपश्यत्, तानिन्द्राय प्रायच्छत्, तैः सꣳस्तम्भꣳसꣳस्तम्भमसुरान-
जयत्, सꣳस्तम्भꣳसꣳस्तम्भं भ्रातृव्यं जयति यस्यैते हूयन्ते ॥ आकूतं चाकूतिश्च ॥ इति यज्ञो वा
आकूतं, दक्षिणाकूतिः ॥ चित्तं च चित्तिश्च ॥ इति मनो वै चित्तꣳ, वाक्चित्तिः ॥ आधीतं
चाधीतिश्च ॥ इति प्रजा वा आधीतं, पशव आधीतिः ॥ विज्ञातं च विज्ञातिश्च ॥ इत्यृग्वै विज्ञातꣳ,
साम विज्ञातिः ॥ भगश्च क्रतुश्च ॥ इति प्रजापतिर्वै भगो, यज्ञः क्रतुः ॥ दर्शश्च पूर्णमासश्च ॥
इति दर्शपूर्णमासा एव तद् द्वादश, द्वादश मासाः सꣳवत्सरः, सꣳवत्सरमेवाप्त्वावरुन्द्धे,
प्रजापतिः प्रायच्छज्जयानिन्द्राय वृष्ण, उग्रः पृतनासु जिष्णुः ॥ तेभिर्वाजꣳ वाजयन्तो जयेम
तेभिर्विश्वाः पृतना अभिष्याम ॥ इति त्रयोदशीमाहुतिं जुहुया—दस्ति मासस्त्रयोदशो,—स्तमेवैतयाप्त्वावरुन्द्धे ॥ अग्ने बलदः सहा ओजः क्रममाणाय मे दा अभिशस्तिकृतेऽनभिशस्तेन्याय ॥ अस्यां
जनतायाꣳ श्रैष्ठ्याय स्वाहा ॥ इति जुहुयाद्, यन्नु कामयेत, चित्रमस्यां जनतायाꣳ स्यामिति,
चित्रमह तस्यां जनतायां भवति, शनलं त्वस्यात्मन् जायते ॥१४॥ ६८–८५

अग्नये भगिनेऽष्टाकपालं निर्वपेद्यः कामयेत, भग्यन्नादः स्यामिति, प्रजापतिर्वै भगो,
यज्ञः क्रतुः, स इमाः प्रजा भगेनाभिरक्षति, तस्मात् सर्वो मन्यते, मां भगोऽरिष्यति मां
भगोऽरिष्यतीति, यदग्नये भगिने भगमेव साक्षादाप्त्वावरुन्धे, भग्यन्नादो भवत्यु,—भौ
सह दर्शपूर्णमासा आलभ्या, उद्वा अन्यः गृह्णे मित्रो मुच्यते, दर्शो वा एतयोः पूर्वः पूर्णमास
उत्तरो, ऽथ पूर्णमासं पूर्वमालभन्ते, तदयथापूर्वं क्रियते, तत् पूर्णमासमालभमानः सरस्वत्यै
चरुं निर्वपेत् सरस्वते द्वादशकपाल,—ममावा३स्या वै सरस्वती पूर्णमासः सरस्वा,—नुभा एवैनौ
यथापूर्वं कल्पयित्वालभता, ऋद्ध्या, ऋध्नोत्येवा,—ऽथो मिथुनत्वाय ॥१५॥ ८६ [३७१]

॥ इति प्रथमकाण्डे यजमान-ब्राह्मणं नाम चतुर्थः प्रपाठकः ॥४॥

---

[ १४ ] तै ३४४ । मा. श्री १.५ ६ ।

अथ पञ्चमः प्रपाठकः ।

## अग्न्युपस्थानम् ।

उपप्रयन्तो अध्वरं मन्त्रꣳ वोचेमाग्नये । आरे अस्मे च शृण्वते ॥ १
अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाꣳ रेताꣳसि जिन्वति ॥ २
उभा वामिन्द्राग्नी आहुवध्या उभा राधसः सह मादयध्यै ।
उभा दातारा इषाꣳ रयीणामुभा वाजस्य सातये हुवे वाम् ॥ ३
अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः ।
यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रꣳ विभ्वꣳ विशेविशे ॥ ४
अस्य प्रत्नामनु द्युतꣳ शुक्रं दुदुह्रे अह्रयः । पयः सहस्रसामृषिम् ॥ ५
अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जानन्नग्न आरोह ततो नो वर्धया रयिम् ॥ ६
दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखा करत् प्र ण आयूꣳषि तारिषत् ॥ ७
अग्न आयूꣳषि पवस आसुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥ ८
अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयम् ॥ ९
अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधत् पोषꣳ रयिं मयि ॥ १०
अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान् वक्षि यक्षि च ॥ ११
स नः पावक दीदिवोऽग्ने देवाꣳ इहावह । उप यज्ञꣳ हविश्च नः ॥ १२

---

[ १ ] मै १,५,५,६ । तै १,५,५ । काठ ६,९ । कपि ४,८ । वा ३,११-१३, १५,१६,१४; १३,१४; १५,२०; १५, २६, ३३,६, १२,५१, १५,५६; २३,३२; १९,३८, ३५,१६, २६,९, ८,३८, १७,८-९ । काण्व ३,१७-१९,२१, १२,२०, १६,४१,४७, ३१,६; २५,३४, ८,१९; २१,४०, २९,३७, ३५,४८, २८,११, २९,३८-३९, ८,२०, १८,१० । मा श्रौ १,६,२ । [ उपप्रयन्तो अध्वरं० ऋ १,७४,१, साम १३७९ । अग्निर्मूर्धा दिवः० ऋ ८,४४,१६; सा २७, १५३२ । उभा वामिन्द्राग्नी० ऋ ६,६०,१३ । अयं ते योनिर्ऋत्वियो० ऋ. ३,२९ १०, अथर्व ३,२०,१। अयमिह प्रथमो० ऋ ४,७,१ । अस्य प्रत्नामनु० ऋ ९,५४,१ । सा. ७१५ । दधिक्राव्णो० ऋ. ४,३९,६; १०,१८६,१, अथर्व ४,१०,६,२०,१३७,३; सा. ३५८ । प्र णा (ण) आयूंषि तारिषत्० ऋ १,७५,१७; अथर्व ११,७,१३;१४ २,६७ १९.३४,४, सा १८४,१८४० । अग्न आयूंषि पवस० ऋ. ९,६६,१९, सा ६२७,१४६४,१५१८ । अग्निर्ऋषिः पवमानः० ऋ ९,६६,२०; सा १५१९ । अग्ने पवस्व स्वपा० ऋ ९,६६,२१ । अग्ने पावक० ऋ ५,२६ १, सा १५२१ । स नः पावक० ऋ. १,१२,१० । अग्निः शुचिव्रततम० ऋ ८,४४,२१ । उदग्ने शुचयस्तव० ऋ. ८,४४,१७, सा १५३४ । शुम्भा भ्राजन्त ईरते० अथर्व १३,२,१ ।

अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः । शुची रोचत आहुतः ॥ १३

उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते । तव ज्योतींष्यर्चयः ॥ १४

अग्नीषोमा इमꣳ सु मे शृणुतꣳ वृषणा हवम् । प्रति सूक्तानि हर्यतं भवतं दाशुषे मयः ॥१५

अग्निस्तिग्मेन शोचिषा यासद्विश्वं न्यत्रिणम् । अग्निर्नो वꣳसते रयिम् ॥

अग्निस्तिग्मस्तिग्मतेजाः प्रति रक्षो दहतु सहतामरातिम् । अपाघशꣳसं नुदताम् ॥ १६

अग्ने सपत्नसाह सपत्नान् मे सहस्व । मा मा तितीर्षन्तारीत् ॥ १ ॥ १७

त्वमग्ने सूर्यवर्चा असि, सं मामायुषा वर्चसा सृज, सं त्वमग्ने सूर्यस्य ज्योतिषागथाः ॥१८

समृषीणाꣳ स्तुतेन सं प्रियेण धाम्ना समहमायुषा सꣳ वर्चसा सं प्रजया सꣳ रायस्पोषेण ग्मीय ॥१९

इन्धानास्त्वा शतꣳ हिमा द्युमन्तः समिधीमहि ।

वयस्वन्तो वयस्कृतꣳ सहस्वन्तः सहस्कृतम् । अग्ने सपत्नदम्भनꣳ सुवीरासो अदाभ्यम् ॥२०

अग्नेः समिदसि,—भिशस्त्या मा पाहि, सोमस्य समिदसि, परस्पा म एधि, यमस्य समिदसि, मृत्योर्मा पाहा,—ऽऽयुर्दा अग्नेऽस्यायुर्मे धेहि, वर्चोदा अग्नेऽसि, वर्चो मे धेहि, चक्षुष्पा अग्नेऽसि, चक्षुर्मे पाहि, श्रोत्रपा अग्नेऽसि, श्रोत्रं मे पाहि, तनूपा अग्नेऽसि तन्वं मे पाहि, यन्मे अग्न ऊनं तꣳन्वस्तन्मा आपृणा,—ऽग्ने यत्ते तपस्तेन तं प्रति तप यो अस्मान् द्वेष्टि यं च वयं द्विष्मो, ऽग्ने यत्ते शोचिस्तेन तं प्रतिशोच यो अस्मान् द्वेष्टि यं च वयं द्विष्मो, ऽग्ने यत्ते अर्चिस्तेन तं प्रत्यर्च यो अस्मान् द्वेष्टि यं च वयं द्विष्मो, ऽग्ने यत्ते हरस्तेन तं प्रति हर यो अस्मान् द्वेष्टि यं च वयं द्विष्मो, ऽग्ने यत्ते तेजस्तेन तं प्रतितितिग्धि यो अस्मान् द्वेष्टि यं च वयं द्विष्मो, ऽग्ने रुचां पते नमस्ते रुचे, मयि रुचं धा,—श्चित्रावसोः स्वस्ति ते पारमशीयाविग्नसोः स्वस्ति ते पारमशीया,—ऽम्भः स्था,—ऽम्भो वो भक्षीय, महः स्थ, महो वो भक्षीयो,—र्जः स्थो,—र्जꣳ वो भक्षीय, रायस्पोषः स्थ, रायस्पोषꣳ वो भक्षीय ॥ रेवती रमध्वमस्मिन्योना अस्मिन्गोष्ठे, ऽस्मिꣳ लोके, ऽस्मिन्क्षये, इहैव स्त मापगात, बह्वीर्भवत, मा मा हासिष्ट ॥ सꣳहितासि विश्वरूपी, मोर्जा विशा गौपत्येना प्रजया रायस्पोषेण ॥ मयि वो राय श्रयन्ताꣳ, सहस्रपोषꣳ वोऽशीय ॥ २ ॥ २१–२४

उप त्वाग्ने दिवे दिवे दोषावस्तर्धिया वयम् । नमो भरन्त एमसि ॥ २५

---

[ १ ] ऋ १,५,८९ । ते १,५,५-६ । काठ ६,९ ७,१ । कपि ४,८. ५,१ वा ३,१०-१० । काण्व. ३,११-१९ ।
[ योऽस्मान्द्वेष्टि द्विष्मः । अथर्व १०,५,१५-२१,३५-३१, १३,७,५ । ]

राजन्तमध्वराणां गोपामृतस्य दीदिविम् । वर्धमान२ स्वे दमे ॥ २६
स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तये ॥ २७
अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः ।
तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥ २८
वसुरग्निर्वसुश्रवा अछा नक्षि द्युमत्तम२ रयिं दाः ।
स नो बोधि श्रुधी हवमुरुष्या नो अघायतः समस्मात् ॥ २९
अभ्युस्था२ विश्वाः पृतना अरातीस्तदग्निराह तदु सोम आह ।
बृहस्पतिः सवितेन्द्रस्तदाह पूषा मा धात् सुकृतस्य लोके ॥ ३०
ऊर्जा वः पश्याम्यूर्जा मा पश्यत । रय्या वः पश्यामि रय्या मा पश्यत ॥ ३१
संपश्यामि प्रजा अहमिडप्रजसो मानवीः । सर्वा भवन्तु नो गृहे ॥ ३२
इडा स्थ मधुकृतः स्योना माविशतेरंमदः । सहस्रपोष२ वोऽशीय ॥ ३३
भुवनमसि सहस्रपोषपुषि, तस्य नो रास्व, तस्य ते भक्तिवानो भूयास्मे,—इडासि
मतभृत, त्वयि मत२, महतम्दसि ॥३॥ ३४
महि त्रीणामवोऽस्तु द्युक्षं मित्रस्यार्यम्णः । दुराधर्ष२ वरुणस्य ॥ ३५
नहि तेषाममा सतां नाध्वसु वारणेषु च । ईशे रिपुरघश२सः ॥ ३६
ते हि पुत्रासो अदितेश्छर्दिर्यछन्त्यजस्रम् । अं दाशुषे वार्याणि ॥ ३७
सोमान२ स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्त२ य औशिजः ॥ ३८
यो रेवान्यो अमीवहा वसुवित् पुष्टिवर्धनः । स नः सिषक्तु यः शिवः ॥ ३९
मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसि । द्युम्नं चित्रश्रवस्तमम् ॥ ४०
कदा च न स्तरीरसि कदा च न प्रयुछसि ॥ ४१

[ ३ ] मै १,५,१० । तै १,५,६ । कठ. ७,१ । कपि. ५,१ । श ३,११-२६ । काश्र ३,१०-१३ । [ उप त्वाग्ने दिवे० । ऋ १,१,७ सा १४ । राजन्तमध्वराणां० । ऋ १,१,८ । स नः पितेव० । ऋ १,१,९ । अग्ने त्वं नो अन्तम० । ऋ ५,२४,१, सा ४४८,११०७ । तं त्वा शोचिष्ठ० । ऋ ५,२४,४, सा ११०९ । वसुरग्निर्वसु० । ऋ ५,२४,२, सा ११०८ । स नो बोधि० । ऋ ५,२४,३ । ]
[ ४ ] मै १,५,११ । तै १,५,६ । कठ ७,२ । कपि ५,२ । श ३,११-१३,२८,२९,३४,३६, ११ ६०, ८,१-३ । काश्र ३,१९-४१,३६,३७, ४०,४४, ८,१-२; १०,६४ । म धं १,६,२ । [ सोमान२ स्वरणं० । ऋ १,१८,१, सा १३९, १४६३ । यो रेवान्यो० । ऋ १,१८,२ । महि त्रीणामवोऽस्तु० । ऋ १०,१८५,१ । नहि तेषाममा० । ऋ १०,१८५,२ । ते हि पुत्रासो० । ऋ १०,१८५,३ । कदा चन स्तरीरसि० । ऋ ८,५१,७, सा ३०० । परि ते दूडभो० । ऋ ४,९,८ । मित्रस्य चर्षणी० । ऋ ३,५९,६ ]

परि ते दूडभो रथोऽस्माँ अश्नोतु विश्वतः । येन रक्षसि दाशुषः ॥ ४२

निम्रदोऽसि३, न्यहं तं मृध्यासं यो अस्मान् द्वेष्टि यं च वयं द्विष्मो, ऽभिभूरस्य३, भ्यहं तं भूयासं यो अस्मान् द्वेष्टि यं च वयं द्विष्मः, प्रभूरसि, प्राहं तमति भूयासं यो अस्मान् द्वेष्टि यं च वयं द्विष्मः ॥ पूषा मा पथिपाः पातु, पूषा मा पशुपाः पातु, पूषा माधिपाः पातु, प्राची दिगग्निर्देवता, यो मैतस्या दिशो अभिदासादग्निं स ऋच्छतु, दक्षिणा दिगिन्द्रो देवता, यो मैतस्या दिशो अभिदासादिन्द्रं स ऋच्छतु, प्रतीची दिङ्मरुतो देवता, यो मैतस्या दिशो अभिदासान्मरुतः स ऋच्छतू, दीची दिङ्मित्रावरुणौ देवता, यो मैतस्या दिशो अभिदासान्मित्रावरुणौ स ऋच्छतू, र्ध्वा दिक् सोमो देवता, यो मैतस्या दिशो अभिदासात् सोमं स ऋच्छतु, धर्मो मा धर्मणः पातु, विधर्मो मा विधर्मणः पात्वा, ऽऽयुश्च प्राणश्च चक्षुश्च विचक्षुश्च प्राङ् चापाङ् चो, रुक उरुकस्य ते वाचा वयं सं भक्तेन गमेमहीमे गृहपते ॥४॥ ४३-४४

यस्य वा अग्निहोत्रे स्तोमो युज्यते स्वर्गमस्मै भवत्य, यज्ञो वा एष यत्र स्तोमो न युज्यत, उपप्रयन्तो अध्वर, मितीयं वा उपोति, रित एव स्तोमं युनक्त्य, थो इमामेव स्तोममुपयुनक्त्य, थो या एवं प्रजा भूतानामन्वतीस्ता एव स्तोममुपयुनक्त्य, स्य प्रत्नामनु द्युत, मित्यसौ वै लोकः प्रत्न, ममुत एव स्तोमं युनक्त्य, थो देवा वै प्रत्ना, तानेव स्तोममुपयुनक्त्यु, भयत एव स्तोमं युनक्तीतश्चामुतश्च, देवान् वा एष प्रयुज्य स्वर्गं लोकमेति, यदाहोपोपेन्नु मघवन् भूय इन्नु ता, इतीयं वा उपोति, रस्यामेव प्रतितिष्ठत्य, थ यदुपवत् पदमाह या एवं प्रजा आभविष्यन्तीस्ता एव स्तोममुपयुनक्ति, परि ते दूडभो रथा, इत्युभयत एवैतया स्तोमं युक्तं परिगृह्णातीतश्चामुतश्चा, ऽग्निर्मूर्धा, ति स्वर्गो वेन, दिवः ककु, दिति स्वर्गो वेन, पतिः पृथिव्या अयं, मिति मिथुना वेना, ऽपां रेतांसि जिन्वती, ति रेतस्वती पशव्या भूरेगमूढा, गायत्र्योपास्थित, गायत्रो३ह्यग्निर्गायत्रच्छन्दाः, स्वेनैवैनं छन्दसोपास्थितो, भा यामिन्द्राग्नी आहुवध्या, इत्युभा३वेतौ सहा, ऽमुं वा अयं दिवा भूते प्रविशति, तस्मादसौ दिवा रोचत, इमामसौ नक्तं, तस्मादयं नक्तं, यदुभा वामित्याहोभा एवैना अछम्बट्कारमुपनिष्ठन, उभयोर्लोकयो रोचतेऽस्मिंश्चामुष्मिंश्च, त्रिष्टुभोपास्थिता, ऽयमिह प्रथमो धायि

[ ५ ] तै. १,५,६ । तै १,५,७ । काठ ७,४ । कपि ५,३ । वा. ३,११-१६,२४,३६, ८,९, १५,२६; ३३,६ । काण्व.३, १७-२२,४१,४४, ८,१, १६,४३. ३०,६ । [ उपप्रयन्तो अध्वरं० । ऋ. १,७४,१; सा.१३७९ । अग्निर्मूर्धा दिवः० । ऋ. ८,४४,१६; सा. २७,१५३१ । उभा वामिन्द्राग्नी० । ऋ. ६,६०,१३ । अयं ते योनिर्ऋ० ऋ. ३, २९,१०, अथर्व. ३,२०,१ । अयमिह प्रथमो० । ऋ. ४,७,१ । अस्य प्रत्ना० । ऋ. ९,५४,१; सा. ७५५ ]

धातृभि,—रित्यग्नि३र्ह्यस्यां प्रथमोऽधीयत, होता यजिष्ठो अध्वरेष्वीड्य, इत्येष हि होता यजिष्ठो अध्वरेष्वीड्यो यमप्नवानो भृगवो विरुरुचु,—रित्यप्नवानो३ह्येवं भृगवो व्यरोचयन्, वनेषु चित्रं३ विभ्वं३ विशे विशा, इत्येष३ह्यीदं३ सर्वं३ विभू,—र्जगत्योपास्थिता,—ऽस्य प्रत्नामनु द्युत,—मिति स्वर्गो वै लोकः प्रत्नं३, स्वर्ग एव लोके प्रतितिष्ठत्य,—यं ते योनिर्ऋत्विय, इत्येष३ह्येतस्य योनिर्ऋत्वियो, ऽग्निः सूर्यस्या,—ऽनुष्टुभोपास्थित ॥५॥ ४५

उपप्रयन्तो अध्वरं,—मिति प्रजापयत्येवैतया,—ऽग्निर्मूर्धा,—ति प्रजापित एवैतया रेतो दधा-त्यु,—भा वामिन्द्राग्नी आहुवध्या, इति प्राणापानौ वा इन्द्राग्नी, प्राणापानौ वा एतन्मुखतो यज्ञस्य धीयेते ॥ अयमिह प्रथमो धायि धातृभि,—रिति गर्भमेवाधा,—दस्य प्रत्नामनु द्युत,—मित्यधुरेवाकु,—रयं ते योनिर्ऋत्विय, इत्यजीजनच्चैवावीवृधच्च, षड्भिरुपतिष्ठते, षड् पृष्ठानि, पृष्ठान्येवाचीक्लृपद्, दधिक्राव्णो अकारिष,—मिति दधिक्रावत्योपतिष्ठत, एषा वा अग्नेर्दधिक्रावती प्रिया तनूः पशव्या सर्वसमृद्धा,—ऽग्नेरेवैतया प्रियं धामोपैत्य,—थो पशुमान् भवत्य,—थो आत्मानमेवैतया यजमानः पुनीते, सप्तभिरुपतिष्ठते, सप्तपदा शक्वरी, शाक्वराः पशवः, पशूनेवावरुन्धे, जीर्यति वा एष आहितः, पशु३र्ह्यग्नि,—स्तदेतान्येवाग्न्याधेयस्य हवींषि संवत्सरे संवत्सरे निर्वपेत्, तेन वा एष न जीर्यति, तेनैनं पुनर्णवं करोति, तन्न सदृश,—मेताभिरेवाग्निपावमानीभिरग्न्याधेयस्य याज्यानुवाक्याभिरुपस्थेय,—स्तेन वा एष न जीर्यति, तेनैनं पुनर्णवं करोति, द्वादशभिरुपतिष्ठते, द्वादश मासाः संवत्सरः, संवत्सरमेवाप्त्वावरुन्द्धे, ऽग्नीषोमीयया त्रयोदश्योपस्थेयो, ऽस्ति मासस्त्रयोदशस्तमेवैतयाप्त्वावरुन्द्धे॥६॥
४६–४७

ब्रह्मवादिनो वदन्ति, कस्मात् सायमग्निमुपतिष्ठन्ते कस्मात् प्रातर्नेत्य,—सौ वा आदित्यः सायमासुवति, तस्मात्सायमुपतिष्ठन्त, एष प्रातः प्रसुवति, तस्मात् प्रातर्नोपतिष्ठन्ते, तस्मात् सायमहुतेऽग्निहोत्रेऽग्निहोत्रिणा नाशितव्यं, तस्मादु प्रातरहुते नाशितव्यं, तस्मात् सायमतिथये प्रत्येनसः, पुण्यत्वात् तु प्रातर्ददति, प्रातरवनेग्येन प्रातरुपस्थेयो, ऽपिश्रिव उन्नीयमाने वा हस्ता अवनेनिजीत, तत्र विहव्यस्य वचसा ऋचो वदेत् प्रातरवनेग्ये वचसः, प्रातरवनेग्येन वा अनाप्तमाप्नोत्य,—नवरुद्धमवरुन्द्धे, तदनाप्तमेवैतेनाप्नोत्य,—नवरुद्धमवरुन्द्धे, ऽग्निमेद्धा

[ ६ ] मै १,५,१ । तै १,५,७ । काठ ७,४ । कपि. ५,३–४ ।
[ ७ ] मै. १,५,९ । काठ. ७,५ । कपि. ५,४ ।

एषं उद्धृत,—स्तं देवाश्छन्दोभिः पर्यस्तृणन्, यदुपतिष्ठते छन्दोभिरेवैनं परिस्तृणात्यु,—भयमस्मा
अक,—रग्नीषोमीयया पूर्वपक्ष उपस्थेयो, ऽग्नीषोमीयो वै पूर्वपक्षो, ऽपरपक्षायैवैनं परिददा,—
त्यैन्द्राग्न्यापरपक्ष उपस्थेय, ऐन्द्राग्नो वा अपरपक्षः, पूर्वपक्षायैवैनं परिददाति, सर्वा ह
वा एनं देवताः संप्रदायमनपेक्षं गोपायन्ति य एवꣳ विद्वानग्निमुपतिष्ठते ॥७॥ ४८

त्वमग्ने सूर्यवर्चा असी,—ति वसीयसे श्रेयस आशिषमाशास्ते, सं मामायुषा वर्चसा सृजे,—
त्यात्मना आशास्ते, सं त्वमग्ने सूर्यस्य ज्योतिषागथा, इति सह ह्येते तर्हि ज्योतिषी
भवतः, समृषीणाꣳ स्तुतेनेति, छन्दाꣳसि वा ऋषीणाꣳ स्तुतं, छन्दोभिरेवैनꣳ समर्धयति,
सं प्रियेण धाम्ने,—त्याहुतयो वा अग्नेः प्रियं धामाहुतिभिरेवैनꣳ समर्धयति, समहमायुषा सꣳ
वर्चसा सं प्रजया सꣳरायस्पोषेण ग्मीये,—त्याशिषमेवाशास्ता, इन्धानास्त्वा शतꣳ हिमा, इति
पृतनाजिद्ध्याहुति,—स्तया राजन्या उपतिष्ठेत, यदा हि राजन्यः पृतना जयत्यथो भवत्यु,—
ताराजन्या उपतिष्ठेत, सर्वो हि पृतना जिगीषति, सर्वो बुभूषति, मनोर्वै दश जाया
आसन्, दशपुत्रा नवपुत्राऽष्टपुत्रा सप्तपुत्रा षट्पुत्रा पञ्चपुत्रा चतुष्पुत्रा त्रिपुत्रा द्विपुत्रैकपुत्रा,
ये नवासꣳस्तानेक उपसमक्रामद्, येऽष्टौ तान् द्वौ, ये सप्त ताꣳस्त्रयो, ये षट् ताꣳश्चत्वारो,
ऽथ वै पञ्चैव पञ्चासꣳ,—स्ता इमाः पञ्च दुरोत इमान् पञ्च निरभजन्, यदिदं किंच मनोः स्वमा-
सीत्, तस्मात् ते वै मनुमेवोपाधावन्, मना अनाथन्त, तेभ्य एताः समिधः प्रायच्छत्, ताभिर्वै
ते तान् निरदहꣳ,—स्ताभिरेनान् पराभावयन्, परा पाप्मानं भ्रातृव्यं भावयति य एवꣳ विद्वानेताः
समिध आदधात्य,—ग्नेः समिदस्य,—भिशस्त्या मा पाही,—त्यभिशस्त्या एनं पाति, सोमस्य
समिदसि, परस्पा म एधी,—ति परस्पा अस्य भवति, यमस्य समिदसि, मृत्योर्मा
पाही,—ति मृत्योरेनं पात्ये,—तद्ध स्म वा आह नारद, इदꣳ वा अग्न्युपस्थानमासे,—त्यभि-
शस्त्या एनं पाति, परस्पा अस्य भवति, मृत्योरेनं पाति ॥८॥ ४९

आयुर्दा अग्नेऽस्या,—ऽऽयुर्मे धेही,—त्यायुरेवास्मिन् दधाति, वर्चोदा अग्नेऽसि, वर्चो मे
धेही,—ति वर्च एवास्मिन् दधाति, चक्षुष्पा अग्नेऽसि, चक्षुर्मे पाही,—ति चक्षुरेवास्य पाति,
श्रोत्रपा अग्नेऽसि, श्रोत्रं मे पाही,—ति श्रोत्रमेवास्य पाति, तनूपा अग्नेऽसि, तन्वं मे पाही,—

---

[ ८ ] मै १,५,० । तै. १,५,७ । काठ ७,६ । कपि ५,५ । वा ३,१९,१८ । काण्व ३,०६,१७,१४,०५ ।
[ ९ ] मै १,५,० । तै १,५,७-८ । काठ ७,६-७ । कपि ५,५ । वा ३,१७,१८,२०-२० । काण्व ३,०३,०४,०६,
०७-०९ ।

ति तन्वमेवास्य पाति, यन्मे अग्न ऊनं तन्वस्तन्म आपृण,—ति यदेवास्यात्मन ऊनं२ यत् प्रजाया यत् पशूनां तदेवैतेनापूरयति, तदाप्याययत्य,—ग्ने यत् ते तपा, इत्येता वा अग्नेस्तन्वो ज्योतिष्मती,—रेतद्ध स्म वा आहारुणं औपवेशि,—यीन् वसीयसः श्रेयस आत्मनो भ्रातृव्यानभिप्रजानीमाभिष्टानग्नेस्तनूभिर्ज्योतिष्मतीभिः परामावयामी,—ति परा पाप्मानं भ्रातृव्यं भावयति य एवं२ विद्वानग्निमुपतिष्ठते, ऽग्ने रुचां पते नमस्ते रुचे, मयि रुचं धा, इति शान्तमेव रुचमात्मन् धत्ते, तेजस्वी ब्रह्मवर्चसी भवति, चित्रावसो स्वस्ति ते पारमशीये,—ति रात्रिर्वै चित्रावसु,—रहुरर्वाग्वसु,—रग्निर्वै रात्रि,—रसा आदित्योऽह,—रेते वै भद्रे, ते ईड्ये, ग्नेराड्, त्रिपत्या हि देवा, रोचते ह वा अस्य यज्ञो वा ब्रह्म वा य एवं२ वेदा,—ऽम्भः स्था,—ऽम्भो वो भक्षीये,—त्यम्भो ३ह्येता, महः स्थ, महो वो भक्षीये,—ति महो ३ह्येता, ऊर्जः स्थो,—र्जं२ वो भक्षीये,—त्यूर्जो ३ह्येता, रायस्पोषः स्थ, रायस्पोषं२ वो भक्षीये,—ति रायस्पोषो ३ह्येता, रेवती रमध्वमस्मिन् योना अस्मिन् गोष्ठ, इति स्व एवैना योनौ स्वे गोष्ठे संवेशयत्य,—यं२ वो बन्धु,—रितो मापगात, बह्वीर्भवत, मा मा हासिष्टे,—त्याशिषमेवाशास्ते, वत्समालभते, वत्सनिक्रान्ता हि पशव, एष वै सहस्रपोषस्येशे, पुष्यति सहस्रं, न सहस्रादवपद्यते य एवं२ वेद, संहितासि विश्व,—रूपेति रूपेण रूपेण ३ह्येषा संहिता, रूपैरेवैना२ समर्धयति, नामासामग्रही,—न्मित्रमाभिरकृतो,—त हि यदा मित्रस्य नाम गृह्णाति मित्रमेवैनेन कुरुते ॥९॥ ५०

सप्त वै बन्धुमतीरिष्टका अग्नौ चित्या उपधीयन्ते, ता वै ता अमुष्मा एव लोकाय, सप्त ग्राम्या इष्टका,—स्ता अत्रोपधेया, गौश्चाश्वश्चाश्वतरश्च गर्द३भोऽजा चाविश्च पुरुषो, यद्वामालभते गवैव चिता भवन्त्य,—थो आलभ्य एवोपधीयन्ते, पराङ् वा एष छन्दोभिः स्वर्गं लोकमेत्यन्यदन्यच्छन्दः समारोह,—सुपत्नामे दिवं द्विषा, इति यदेतेन गायत्रेण तृचेनोपतिष्ठत, इयं२ वै गाय३,—त्र्यस्यामेव प्रतितिष्ठत्य,—ग्ने त्वं नो अन्तमा, इत्येषा वा अग्नेस्तनूः प्रिया तनूर्वरू३थ्या, तामेव प्रैति, नैनमभिदासन्त्स्तृणुते, चतसृभिर्द्विपदाभिरुपतिष्ठते, चतुष्पादो वै पशवो, द्विपाद् यजमानो, गृहा गार्हपत्यो, गृहेषु चैव पशुषु च प्रतितिष्ठ,—त्यूर्जा वः पश्या,—म्यूर्जा मा पश्यते,—त्यूर्जैनाः पश्यत्यू,—र्जैनं पश्यन्ति, रय्या वः पश्यामि, रय्या

[ १० ] मै. १,५,३। तै १,५,८। काठ ७,७–८। वा ३,२२,२५। काण्व ३,३०,३२। [ उप स्याग्ने...पमसि० । ऋ. १,१,७. मा. १४। अग्ने त्वं नो वरूथ्य० । ऋ ५,२४,१, गा ४२८; ११०७ ]

न्ता पश्यन्तें,—ति रूप्यन्ताः पश्यति, रूप्यन्तं पश्यन्ति ॥ ५१
मंपश्यामि प्रजा अहमिडप्रजसो मानवीः । सर्वा भवन्तु नो गृहे ॥ ५२
इरत्यंटीश्च या इमाः प्रजा मानवीश्च, तां एवावारुन्द्ध, तां आधा अकुर्ते,—इडाः स्थ मधुकृ-
र्तीडा रश्मेता मधुकृतः, स्योना माविशतेरमदा, इतीरमदो रश्मेवा, भुवनमसि सहस्र-
पुषी,—ति भुवन५ रश्मेतत् सहस्रपोषपुषि, तस्य नो रास्व, तस्य ते भक्तिवानो भूयास्मे,—
त्याशिषमेवाशास्ता, इहागि व्रतभृदिं,—तीडा रश्मेषा व्रतभृत, त्वयि व्रत५, व्रतभृद्नी,—ति ५३
मतभृं रश्मेषा ॥१०॥

प्राणान्, वृङ्क्ते भ्रातृव्यस्य प्राणान्, नैनमभिदासन्नस्तृणुते य एवं वेद, धर्मो मा धर्मणः पातु, विधर्मो मा विधर्मणः पात्वा,—ऽऽयुश्च प्रायुश्च चक्षुश्च विचक्षुश्च प्राङ् चापाङ् चोरुकं, इत्ययं वा उरुकं, एष विभजति, तद्यदेव भजति तदेतस्मिन्नेत्र पुनराभजत्य,—ग्ने गृहपते-ऽग्निं समिन्धे यजमान, एतद्धै यजमानस्य स्वं यदग्नि,—रेतद्गृहपतेर्यजमान, आयतनमिव वा एतत् क्रियते, ज्योतिषे तन्तवे त्वे,—त्यन्तराग्नी उपविश्य वदे,—द्यामेव पुर आशिषमाशास्ते यां पश्चात् तामात्मन् धत्ते ॥११॥ ५४

ददन्मा, इति वै दीयते, सदर्दि वा एष ददाति योऽग्निहोत्रं जुहोति, यद्यत् कामयेत तत् तदग्निहो३त्र्यग्निं याचे,—दुप हैनं तन्नमति, तदाहु,—र्ऋच्छति वा एष देवान् य एनान् त्सदर्दि याचतीति, तस्मात् तर्हि नोपस्थेयो, यमो वा अम्रियत, तं देवा यम्या यममपाब्रुवं,—स्तां यदपृच्छन्त्साब्रवीद,—द्यामृतेति, तेऽब्रुवन्, न वा इयमिमममित्थं मृष्यते, रात्रीं सृजा-महा, इत्यहर्वाव तर्ह्यासीन्न रात्रि,—स्ते देवा रात्रिमसृजन्त, ततः श्वस्तनमभवत्, ततः सा तम-मृष्यत, तस्मादाहु,—रहोरात्राणि वावाघं मर्षयन्तीति, सा वै रात्रिः सृष्टा पशूननुभिसममिलत्, ते देवाश्छन्दोभिरेव पशूनन्वपश्यं,—श्छन्दोभिरेनान् पुनरुपाह्वयन्त, यदुपतिष्ठते छन्दोभिर्वा एतत् पशूननुपश्यति, छन्दोभिरेनान् पुनरुपह्वयते, ऽथो आहु,—र्वरुणो वै स तद् रात्रिर्भूत्वा पशूनग्रसतेति, ते देवाश्छन्दोभिरेव वरुणात् पशून् प्रामुञ्चं,—श्छन्दोभिरेनान् पुनरुपाह्वयन्त यदुप-तिष्ठते छन्दोभिर्वा एतद् वरुणात् पशून् प्रमुञ्चति छन्दोभिरेनान् पुनरुपह्वयते, यज्ञो यज्ञो वै समृच्छते, ऽयाकस्यविदो मन्यन्ते, सोम एव समृच्छता, इत्यग्नीषोमीयायाः पुरस्ताद्धविष्यस्य चतस्रा ऋचो वदे,—दाग्नेयस्य पुरोडाशस्य द्वे याज्यानुवाक्ये कुर्या,—देतेनैव हवींष्यासन्नान्यभिमृशेद्, यू३ङ्क्तेऽन्यस्य यज्ञं नास्यान्यो यज्ञं वृङ्क्ते, संयज्ञो भवत्ययज्ञा इतरः ॥१२॥ ५५

अग्निं वा एते चित्यं चिन्वते य आहिताग्नयो दर्शपूर्णमासिन,—स्तेषां वा अहोरात्राण्येवेष्टका उपधीयन्ते, यत्र पञ्च रात्रीः संहिता वसेत् तज्जुहुयात्, पञ्च रात्रयः पञ्चाहानि सा दशद् संपद्यते, तन्नैव कर्तव्या, अयुतं तद्, दशस्वेव रात्रिष्वन्ततमं होत३व्यं, तथा यत्तं क्रियते, न सर्वेषु युक्तेषु होत३व्यं, वास्तौ जुहुयाभा, ऽयुक्तेष्व,—यतं क्रियते, मर्माण्यन्यानि

[ ११ ] तै १,५,९। काठ ७,१०। कपि. ५,६।
[ १२ ] तै ३,४,१०। मा. श्रौ १,६,४। [ अमोयद्वा पदि ना:०। ऋ ७,५५,१। वास्तोष्पते प्रति.. चतुष्पदे०। ऋ ७,५४,१ ]

युक्तानि स्यु,—रग्निर्हास्य दक्षिणो युक्तः स्यात्, सव्यस्य योक्त्रं परिहत,—मथ जुहुया,—न्नं वास्तौ
जुहोति, यतमुत्क्रियते, तन्न संस्पृश्यं, सर्वेष्वेव युक्तेषु होतव्यं, वास्तोष्पत्यं३ इहेते,—
न्नं हीनमन्वाहर्तवै, रुद्राय हि तद्धीयते, यद्धीनमन्वाहरेयू रुद्रे भूतमन्वाहरेयु,—र्यद्यनुवाहः
स्यात् पूर्वं तं प्रवहेयुरप वोद्धरेयु,—र्यद्धीयेत हीयेतैव तं,—दथ जुहुयात् ॥ ५६

अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन् । सखा सुशेव एधि नः ॥ ५७
वास्तोष्पते प्रति जानीह्यस्मान्त्स्वावेशो अनमीवो भवा नः ।
यत्त्वेमहे प्रति तन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे ॥ १३ ॥ ५८

पशून्मे शꣳस्य पाहि, तान्मे गोपायास्माकं पुनरागमात् ॥ अग्ने सहस्राक्ष शतमूर्धञ्छतं ते प्राणाः
सहस्रमपाना,—स्त्वꣳ साहस्रस्य राय ईशिषे, तस्मै ते विधेम वाजाय ॥ प्रजां मे नर्य पाहि,
तां मे गोपायास्माकं पुनरागमा,—दग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासꣳ, सुगृहप-
तिस्त्वं मया गृहपतिना भूया, अन्नं मे बुध्य पाहि, तन्मे गोपायास्माकं पुनरागमात् ॥५९-६१

इमान् मे मित्रावरुणौ गृहान् गोपायतꣳ युवम् ।
अविनष्टानविहुतान् पूषैनानभिरक्षत्वास्माकं पुनरागमात् ॥ ६२

पशून्मे शꣳस्य पाहि, तान्मे गोपायास्माकं पुनरागमा,—दित्याहवनीयमुपतिष्ठत, आहव-
नीयायैव पशून् परिदाय प्रैत्य,—ग्ने सहस्राक्ष शतमूर्ध,—न्निति सहस्राक्षो ३ह्येष शतमूर्धा, शतं
ते प्राणाः सहस्रमपाना, इति शतꣳ ३ह्येतस्य प्राणाः सहस्रमपाना,—स्त्वꣳ साहस्रस्य राय
ईशिषे, तस्मै ते विधेम वाजाये,—त्याशिषमेवाशास्ते ॥ प्रजां मे नर्य पाहि, तां मे गोपाया-
स्माकं पुनरागमा,—दिति गार्हपत्यमुपतिष्ठते, गार्हपत्यायैव प्रजां परिदाय प्रैत्य,—ग्ने गृहपते
सुगृहपतिरहं त्वया गृहपतिना भूयासꣳ, सुगृहपतिस्त्वं मया गृहपतिना भूया, इत्यग्रहणी
संज्ञपितः, सर्वमायुरितो, नार्तिं ३नीतो, ऽन्नं मे बुध्य पाहि, तन्मे गोपायास्माकं
पुनरागमा,—दिति दक्षिणाग्निमुपतिष्ठते, दक्षिणाग्नय एवान्नं परिदाय प्रैति ॥ ६३-६४

इमान् मे मित्रावरुणौ गृहान् गोपायतꣳ युवम् ।
अविनष्टानविहुतान् पूषैनानभिरक्षत्वास्माकं पुनरागमात् ॥ ६५

इत्यहोरात्रे वै मित्रावरुणौ, पशवः पूषा, ऽहोरात्राभ्यां चैव मित्रावरुणाभ्यां च गृहान्परिदाय
प्रैति ॥ अग्निꣳ समाधेहि ॥ इत्याह, भस्म त्वा उपतिष्ठते ॥ पशून्मे शꣳस्याजुगुप,—स्तान्मे

---

[ १४ ] ऋ. ७,१,११ । कपि. ६,१ । का. ३,१७, १७,७१; ९,१७ । कान्त. ३,४३; १८,७१; ९,४९ । मा. श्रौ. १,६,३।

पुनर्देहि ॥ इत्याहवनीयं पुनरेत्योपतिष्ठत, आहवनीयेनैवं पशून्गुप्तानात्मन्धत्ते ॥ अग्ने सहस्राक्ष शतमूर्धञ्छतं ते प्राणाः सहस्रमपाना,—स्त्वं साहस्रस्य राय ईशिषे, तस्मै ते विधेम वाजाय ॥ प्रजां मे नर्याजुगुप,—स्तां मे पुनर्देहि ॥ इति गार्हपत्यं पुनरेत्योपतिष्ठते, गार्हपत्येनैवं प्रजां गुप्तामात्मन्धत्ते ॥ अग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासं, सुगृहपतिस्त्वं मया गृहपतिना भूया, अन्नं मे बुध्न्याजुगुप,—स्तन्मे पुनर्देहि ॥ इति दक्षिणाग्निं पुनरेत्योपतिष्ठते, दक्षिणाग्निनैवान्नं गुप्तमात्मन् धत्ते ॥ ६६-७५

इमान् मे मित्रावरुणौ गृहान् जुगुपतं युवम् ।
अविनष्टानविहुतान् पूषैनानभ्यरक्षीदास्माकं पुनरागमात् ॥ ७६

इत्यहोरात्रे वै मित्रावरुणौ, पशवः पूषा, ऽहोरात्राभ्यां चैवं मित्रावरुणाभ्यां च गृहान् गुप्तानात्मन् धत्ते ॥ १४ ॥ ७७ [ ४४८ ]

॥ इति प्रथमकाण्डे अग्न्युपस्थानं नाम पञ्चमः प्रपाठकः ॥५॥

अथ षष्ठः प्रपाठकः ।

## आधानम् ।

प्र वो वाजा अभिद्यवो हविष्मन्तो घृताच्या । देवान् जिगाति सुम्नयुः ॥ १
उप त्वा जुह्वो मम घृताचीर्यन्तु हर्यत । अग्ने हव्या जुषस्व नः ॥ २
उदग्ने तव तद् घृतादर्ची रोचत आहुतम् । निंसानं जुह्वो मुखे ॥ ३
प्रजा अग्ने संवासयेहाशाश्च पशुभिः सह । राष्ट्राण्यस्मिन् धेहि यान्यासन्त्सवितुः सवे ॥४
अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जानन्नग्न आरोह ततो नो वर्धया रयिम् ॥ ५
आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरं च प्रयन्त्स्वः ॥ ६
त्रिंशद्धामा विराजति वाक् पतंगाय ह्रयते । व्यख्यन्महिषो दिवम् ॥ ७
अन्तश्चरत्यर्णवे अस्य प्राणादपानतः । प्रति वाश्वरो अहभिः ॥ ८

---

[१] तै १,५,३, ५,७,९ । काठ० ७,१७,१३ । कपि० ६,२,४, ७,० । तै ब्रा १,२,१,१३,१६, १,२,७,१. १,१,४,८ । वा ३,४,१४.६,८,७, १३,१४.१ ( प्र पा ) ३,५. १९ ३८. ३५.१६ ( प्र पा ) । काण्व ३,४,२०,६,८,७ १४,३६,१ ( प्र पा ). ३,५. ८,१९ ०१,४०, ०१,३७ ३५,४८ ( प्र पा )। मा श्रौ. १,५,१-३ । [ प्र वो वाजा० । ऋ ३,२७,१ ] [ आयं गौः० । ऋ १०,१८९,१ । अथर्व ६,३१,१; २०,४८,४ । सा ६३० । त्रिंशद्धामा० । ऋ १०,१८९.३ । अथर्व ६,३१.३, २०,४८,६ । सा. ६३२ । अन्तश्चरत्य० । ऋ १०,१८९,२ । अथर्व ६,३१,२, २०,४८,५ । सा ६३१ ।]

इतो ज॒ज्ञे प्र॑थ॒मꣳ स्वाद्योने॒रधि॑ जा॒तवे॑दाः ।
स गा॑य॒त्र्या त्रि॒ष्टुभा॒ जग॑त्यानु॒ष्टुभा॑ च दे॒वेभ्यो॑ ह॒व्या व॑हतु प्रजा॒नन् ॥ ९
यो नो॑ अ॒ग्निः पि॑तरो हृ॒त्स्व॑न्तरम॑र्त्यो॒ मर्त्यां॒ आवि॒वेश॑ ।
तमा॒त्मनि॒ परि॑गृह्णीमसी॒ह नेदु॑षो अ॒स्मान॒नुवहा॑य॒ परा॑यत् ॥ १०
दोहा॑ च ते दुग्धभृ॒च्चोर्वरी॑, तं ते॑ भाग॒धेय॒म् प्रय॑च्छामि, ताभ्यां॑ त्वाद॑धे, घ॒र्मः शिरः॑, स्त्व॑
दु॑यम॒ग्निः सं॑प्रि॒यः प॒शुभि॑र्भव, पु॒री॑षमसि, यत्ते॑ शुक्र शु॒क्रं ज्योति॒स्तेन॑ रु॒चा रु॑चमशीथाः॥ ११
मयि॑ गृह्णा॒म्यह॑मग्रे अ॒ग्निꣳ स॒ह प्र॒जया॒ वर्च॑सा॒ धने॑न ।
मयि॑ क्ष॒त्रं म॒यि॑ सयो॒ दधा॑मि॒ मदे॑म श॒तहि॑माः सु॒वीराः॑ ॥ १२
भूर्भुवः॒, ऽङ्गिर॑सां त्वा दे॒वाना॒ꣳ व्र॒तेना॑दधे, ऽग्नेष्ट्वा दे॒वस्य॑ व्र॒तेना॑दधा, इन्द्र॑स्य त्वा
म॒रुत्व॑तो व्र॒तेना॑दधे, मनो॑ष्ट्वा ग्राम॒ण्यो व्र॒तेना॑दधे ॥ १३
आछ॑दि॒ त्वा छन्दो॑ दधे॒ द्यौर्म॑हा॒सि भूमि॑र्भू॒ना ।
तस्या॑स्ते दे॒व्यदि॑त उ॒पस्थे॑ऽन्ना॒दम॒ग्निम॑न्न॒पत्या॒याद॑धे ॥ १४
अग्न॒ आयू॑ꣳषि पवसे, ऽग्निर्ऋषिः॑, ग्ने॒ पव॑स्व ॥१॥ १५
या वा॑जि॒न्नग्नेः॒ पव॑माना प्रि॒या त॒नूस्ताम॒ावह॑, या वा॑जि॒न्नग्नेः॑ पाव॒का प्रि॒या त॒नूस्ताम॒ावह॑,
या वा॑जि॒न्नग्नेः॒ शुचिः॑ प्रि॒या त॒नूस्तामा॑वह ॥ १६
यदक्र॑न्दः प्रथ॒मं जाय॑मान उ॒द्यन्त्स॑मु॒द्रादु॒त वा॒ पुरी॑षात् ।
श्ये॒नस्य॑ ते प॒क्षा ह॑रि॒णस्य॑ बा॒हू उ॑प॒स्तुत्यं॒ जनि॑म॒ तत्ते॑ अर्वन् ॥ १७
ओज॑से॒ बला॑य त्वोद्य॑च्छे॒ वृष्णे॒ शुष्मा॑य, सपत्न॒तूर॑सि वृत्र॒तूः ॥ १८
प्राची॒मनु॑ प्र॒दिशं॒ प्रेहि॑ वि॒द्वान॒ग्नेर॑ग्ने पु॒रो अ॒ग्निर्भ॑वे॒ह ।
विश्वा॒ आशा॒ दीद्य॑द्वि॒भाह्यू॒र्जं नो॑ धेहि द्वि॒पदे॒ चतु॑ष्पदे ॥ १९

[ ० ] मै १,६,७ ०,८,१० । ते ४,२,८,१, ३,५,११,१, १,८,१६,१, ४,६,५,५ ४,४,११ । काठ ७,१३-१४, ४०,७ ३९,१ । कपि. ६,३-४ ७,० । मा ११ ८३ २९ १२, ०७,६६ ३४,१५, १७,७१ ८९-९१, १०,१७, ००,० ३४,५३,५७, १३,१५ १४,६,१५,१६,०७, १५,५७ । काण्व १०, ८४, ३१,१४, १८,६६,७९, ३३,९ १९,३-५, ११,३७, ०१,९३, ३३ ४१ ६५ १४,०६, १५५ १६,३१ १६,७१ । ते मा १,१,७,१-३ । मा पौ. ०,५४ ५ । [ यदक्रन्दः प्रथमं० । ऋ १,१६३,१ । इडा ( त्वा ) यास्त्वा पदे० । ऋ. ३,२९,४ । समुद्रादूर्मि० । आततान ( आयियेदा ) । ऋ ४,५८,१-३ । निषसाद घृत० । ऋ. १,२५ १० । उत नोऽहिर्बुध्न्यः । ऋ ६,५०,१४ । स नूनं महसा० । ऋ १,४०,५ ]

अभ्युस्थाꣳ विश्वाः पृतना अरातीस्तदग्निराह तदु सोम आह।
बृहस्पतिः सवितेन्द्रस्तदाह पूषा मा आधात् सुकृतस्य लोके ॥ २०

भुवः ३स्वरं,ऽङ्गिरसां त्वा देवानाꣳ व्रतेनादधे, ऽग्नेष्ट्वा देवस्य व्रतेनादधा, इन्द्रस्य त्वा मरुत्वतो व्रतेनादधे, मनोष्ट्वा ग्रामण्यो व्रतेनादधे ॥ २१

आछदि त्वा छन्दो दधे यामिद्धासि भूमिर्भूना।
तस्यास्ते देव्यदित उपस्थेऽन्नादमग्निमन्नपत्यायादधे ॥ २२

यत् ते शुक्र शुक्रं ज्योतिः शुक्रं धामाजस्त्रं तेन त्वादधे ॥ २३

इडायास्त्वा पदे वयं नाभा पृथिव्या अधि।
जातवेदो निधीमह्यग्ने हव्याय वोढवे ॥ २४

सम्राट् च स्वराट् चाग्ने ये ते त३न्वौ ताभ्यां मा ऊर्जꣳ यछ, विराट् च प्रभूश्चाग्ने ये ते त३न्वौ ताभ्यां मा ऊर्जꣳ यछ, विभूश्च परिभूश्चाग्ने ये ते त३न्वौ ताभ्यां मा ऊर्जꣳ यछ ॥२५

समुद्रादूर्मिर्मधुमं उदारदुपाꣳशुना समृतत्वमानद्।
घृतस्य नाम गुह्यꣳ यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥ २६

वयं नाम प्रब्रवामा घृतस्यास्मिन् यज्ञे धारयामा नमोभिः।
उप ब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गोऽवमीद्गौर एतत् ॥ २७

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।
त्रेधा बद्धो वृषभो रोरवीति महो देवो मर्त्यं आविवेश ॥ २८

ये अग्नयः समनसा ओषधीषु वनस्पतिषु प्रविष्टाः।
ते गिराश्मभिसꣳयन्तु सर्व ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥ २९

सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त ऋषयः सप्त धाम प्रियाणि।
सप्त ऋत्विजः सप्तधा त्वा यजन्ति सप्त होत्रा ऋतुथा नु विद्वान् स्सप्त योनीरापृणस्व घृतेन स्वाहा ॥ ३०

ये अग्नयो दिवो ये पृथिव्याः समागच्छन्तीषमूर्जꣳ वसानाः।
ते अस्मा अग्नये द्रविणं दत्त्वैताः प्रीता आहुतिभाजो भूत्वा यथालोकं पुनरस्तं परेत स्वाहा ॥
निषसाद धृतव्रतो वरुणः प३स्त्यास्वा। साम्राज्याय सुक्रतुः ॥ ३१–३२

उत नो ऽहिर्बुध्न्यः शृणोत्वज एकपात् पृथिवी समुद्रः ।
स्तुता मन्त्राः कविशस्ता अवन्तु न एना राजन् हविषा मादयस्व ॥ ३३
प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् ।
यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ॥ ३४

घर्मः शिर,—स्तदयमग्निः संप्रियः पशुभिर्भव, पुरीषमसि, यच्छा तोकाय तनयाय शं योर,
—र्को ज्योति,—स्तदयमग्निः संप्रियः पशुभिर्भव, पुरीषमसि, यच्छा तोकाय तनयाय शं
यो,—र्वातः प्राण,—स्तदयमग्निः संप्रियः पशुभिर्भव, पुरीषमसि, यच्छा तोकाय तनयाय शं
योः ॥ अविषं नः पितुं पच ॥ ३५-३६

कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः ।
कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रताः ॥ ३७
ये अग्नयः समनसा ओषधीषु वनस्पतिषु प्रविष्टाः ।
ते निराजमभिसंयन्तु सर्वा ऊर्जं नो धत्त द्विपदे चतुष्पदे ॥ २ ॥ ३८

प्रजापतिर्वा इदमग्र आसीत्, तं वीरुधोऽभ्यरोह,—न्नसुर्यो वा एता यदोषधय,—स्ता अति-तिष्ठिपन्नतिष्ठिं नोशक्नोत्, सोऽशोचत्, सोऽतप्यत, ततोऽग्निरसृज्यत, तमग्निं सृष्टं वीरुधां तेजोऽगच्छत्, ता अशुष्यं, न ततः पुराशुष्यन्, स प्रजापतिरग्निमाधत्ते,—मा एवा सहा, इति ता अमहत्, तत् सादयं चावप आधीयते, तद्यथादो वसन्ताच्छिशिरेऽग्निर्वीरुधः सहत एवं सपत्नं भ्रातृव्यमरातिं सहते य एवं विद्वानग्निमाधत्ते, एतावद्वा अस्या अनभिमृतं यावद्भिः परिगृहीता, तामुद्धत्याप उपसृज्याग्निमाधत्ते, यज्ञियामेवैनां मेध्यां कृत्वाधत्ते, ऽमेध्यां इयं सृष्टादभिमेद,—ति मा धक्ष्यतीति, यदप उपसृज्याग्निमाधत्तेऽस्या अनतिदाहाय,—पो वै प्रजापतेः मैत्रता तनूर्यदापः, सर्वत एनं प्रजाः सर्वतः पशवोऽभि पुण्येन भवन्ति य एवं विद्वानप उपसृज्याग्निमाधत्ते, यावद्वै वराहस्य चषालं तावतीयमग्र आसीद्, यद्वराहविहतमुपास्याग्निमाधत्त इमामेव तच्चोपाराद्,—स्या एनं मात्रायामध्याधत्ते, तस्मादेषा वराहाय निगदत, एषं ह्यस्या मात्रां बिभर्ति, देवपाणयो वै नामासुरा आसं,—स्ते देवगवीरपाजन्,—स्ता अन्वगच्छं,—स्ता अभ्याजं,—स्तासां पयोऽहीयत, तेऽब्रुवन्, यद्वा आसां वयमपहृतास्मेति, तद्वराहा भूत्वासुरेभ्योऽपि देवानागच्छन्, तस्माद्वराहं गावोऽनुधावन्ति स्वं

[ १ ] क० ८ । १ । ६ ७ ।

यथो जानाना,—स्तंयाचेत् प्रियमेव पशूनां द्विपदां चतुष्पदां यथस्तावत्प्रियः पशूनां द्विपदां चतुष्पदां भवति य एवँ विद्वान् पुराहंविहतमुपास्याभिमाधत्ते, एतद्वा अस्या अनभिमृतँ यद्वल्मीको, यद्वल्मीकवपामुपकीर्याग्निमाधत्तेऽस्या एवैनमनभिमृतेऽध्याधत्ते, रसो वा एषोऽस्या उद्दीपद्य-द्वल्मीको, यद्वल्मीकवपामुपकीर्याग्निमाधत्तेऽस्या एवैनँ रसेऽध्याधत्ता, ऊर्ग्वा एषोऽस्या उद्दीपद्यद्वल्मीको, यद्वल्मीकवपामुपकीर्याग्निमाधत्तेऽस्या एवैनमूर्ज्यध्याधत्ते, प्रजापतेर्वा एष स्तनो यद्वल्मीको, यद्वल्मीकवपामुपकीर्याग्निमाधत्ते प्रजापतिरेवास्मै स्तनमपिदधात्य,—न्नाद्यमस्मा अवरुन्धे, ऽक्षुध्यताँ स्वानां पुरःस्थाता भवति य एवँ वेद,—तावद्वा अमुष्या इह यज्ञियँ यदूषा, यदूषानुपकीर्याग्निमाधत्तेऽमुष्या एवैनँ यज्ञियेऽध्याधत्ते, न वा अनुपरिहः पशवो रेतो दधते, यदूषानुपकीर्याग्निमाधत्ते रेत एवैतद्दधाति, पशूनां पुष्ट्यै प्रजात्या, एष वा अग्निर्वैश्वानरो यदसा आदित्यः, स यदिहासीत्तस्यैतद्भस्म यत्सिकता, यत्सिकता उपकीर्या-ग्निमाधत्ते स्व एवैनँ योनौ स्वे भस्मन्नाधत्ते, शिथिरा वा इयमग्र आसीत्, तां प्रजापतिः शर्कराभिरदृँहद्, यं शर्करा उपकीर्याग्निमाधत्त, इमामेव तद् दृँहति धृत्यै, तद्यथेमां प्रजापतिः शर्कराभिरदृँहदेवमस्मिन् पशवो दृँहन्ते य एवँ विद्वाञ्छर्करा उपकीर्याग्निमाधत्त, इन्द्रो वै वृत्राय वज्रं प्राहरत्, तस्य या विप्रुषा आसँस्ताः शर्करा अभवन्, यं शर्करा उपकीर्या-ग्निमाधत्ते वज्रमेव सपत्नाय भ्रातृव्याय प्रहरति, यं द्विष्यात्तं तर्हि मनसा ध्यायेद्, वज्रमेवास्मै प्रहरति, स्तृणुत एवं, पुरीषी,—ति वै गृहमेधिनमाहुः, पुरीषस्य खलु वा एतद्रूपँ यदाखुकिरि,—र्यदाखुकिरिमुपकीर्याग्निमाधत्ते पुरीषी गृहमेधी भवति ॥ ३ ॥ २९

अग्निँ वै देवा विभाजं नाशक्नुवन्, यत्प्राञ्चमहरन्त्सत्रैः पुरोऽभवद्, यत्प्रत्यञ्चमहरन्त्सर्वैः पृथग्भवत्, तमश्वेन पूर्ववाहोद्वहँस्तदश्वस्य पूर्ववाहः पूर्ववाट् त्वम्,—येवं विभक्त्या अश्वोऽग्न्याधेये दीयते, ऽविभक्तो वा एतस्याग्निरनाहितो योऽश्वमग्न्याधेये न ददात्य,—थ योऽश्वमग्न्याधेये ददाति विभक्त्यै, विभाज्यैवैनमाधत्ते, स्तोमपुरोगवा वै देवा असुरानभ्यजयन्,—त खलु वै स्तोमो यदश्वो, यदश्वं पुरस्तान्नयन्त्यभिजित्या, अभिजित्यैवैनमाधत्ते, प्रजापतेर्वै चक्षुर-श्वयत्, तस्य यः श्वयथा आसीत् सोऽश्वोऽभवद्, यदश्वं पुरस्तान्नयन्ति यजमानायैव चक्षुर्दधाति, न पराङ्वसृज्यो, यत् पराञ्चमवसृजेद्यजमानं चक्षुर्जह्याद,—न्धः स्यात्, प्रत्यञ्चमाधेयो,

[ ४ ] तै ब्रा १.१.५ । काठ ८.५ । कपि ७.१–२ ।

द्येनं भ्रातृव्योऽतीव स्याद्, भूमिरसी,—ति प्रतीचीं यथन्त्वे,—दितिरसि भूमिरसी,—ति तिरश्चीं यदि सद्,—इडिं वा अदिति,—रनया वा एतद्यजमानो भ्रातृव्यं प्रभूतं प्रणुदते, ऽनया प्रतिनुदते, ऽनया विनुदते, तद्भ्रातृव्यस्य वा एष विनोदः, काण्डात्काण्डात्प्ररोहन्ती,—ति दूर्वेष्टकामुपदधात्यो,—षधीनां प्रतिष्ठित्यै, काण्डात्काण्डाद्ध्येषा प्रतितिष्ठतीति, पशवो वा इष्टका, न वै पशवा आयवसे रमन्ते, यद्दूर्वेष्टकामुपदधात्यायतनमिव वा एतत् क्रियते, पशूनां यत्या, अथैषा वामभृद् द्वियजु,—र्यजमानलोकमन्येन दाधार, भ्रातृव्यलोकमन्येन वृङ्क्त, एतया वै देवा असुराणां वामं पशूनवृञ्जत, तद्वामभृतो वामभृत्त्वं, छन्दांसि वै देवानां वामं पशव,—श्छन्दांस्येवैतया वामं पशून् यजमानो भ्रातृव्यस्य वृङ्क्ते, ऽथैते रेतःसिचा, इयं शिरो,—ऽसौ स्वरा,—ऽसा एवं रेतः सिञ्चती,—यं प्रजनयत्य,—भिरत्यन्नादो भवति यस्यैते उपधीयेते, यदि पुत्री चिन्वीत प्रथमायां चित्यामन्यामुपदध्या,—दुत्तमायामन्यां, रेतसः सिक्तस्य परिगृहीत्यै, यद्यपुत्रः प्रथमायां चित्यामुभे उपदधेत्, सम्यञ्चौ हि भूत्वा रेतः सिञ्चतः ॥ ६ ॥ ८

अथैता विश्वज्योतिष, एषु वा एतल्लोकेषु ज्योतिष्मन्तमग्निं निधत्ते, ऽथो प्राणानां विधृत्या, अथैषा स्यालिखिते,—मे वै लोकाः स्यालिखिते,—माने लोकानुपाधत्त, उभये वा एतामुपादधत देवाश्च वा असुराश्चो,—परिष्टाल्लक्ष्माणं देवा उपादधता,—ऽधस्ताल्लक्ष्माणमसुरा,—स्ततो देवा अभवन्, परासुरा, उपरिष्टाल्लक्ष्माणमुपदधीत भ्रातृव्यवान्यो वास्य प्रियः स्यात्, तस्य भवत्यात्मना, परास्य भ्रातृव्यो भवत्ये,—षं वा असपत्नेष्टका,—ऽसपत्नो भवति य एतामुपधत्ते, ऽथो देवलक्ष्मं वा एषा, देवलक्ष्ममेवोपधत्ते, या सोपाया अधि मृद्व् शिष्यते तस्या एता कुर्यात्, तेनास्य सर्वा आग्नेयीरिष्टका भवन्त्य,—थैष कूर्मः, श्मशानचितो वा एते चीयन्ते, जीवः कूर्म उपधेय,—स्तेन वा एषोऽश्मशानचित्, तेनोत्पाती, पशूनां वा एष मेधा, एतं वै मेधं पश्यन्त एनं पशवोऽमुष्मिंल्लोक उपतिष्ठन्ते, प्रत्यञ्चं सादयति, प्रत्यञ्चो हि पशवो मेधमुपतिष्ठन्ते, द्यावापृथिवीयया सादयति, द्यावापृथिवी हि पशवोऽनूपतिष्ठन्ते, पशुभिरेवैनं सम्यञ्चं दधाति, विष्णोर्नाभ्यामभिश्रेतव्या, इत्याहुः, प्रादेशमात्रमुलूखलं कार्यं,—मेतावान् वै विष्णु,—र्विष्णोर्वा एतन्नाभ्यामभिश्रीयत,

[ ७ ] तै. ५,२,८-९ । काठ. २०,६-७ । कपि. ३१,८-९ ।

ऊ३र्जर्यग्निश्चेत३व्या, इत्याहु,—रूर्ग्वा उदुम्बरो, यदौदुम्बरमुलूखलं भवत्यूर्जि वा एतदग्निश्ची-
यते, वैष्णव्या सादयति, वैष्णवं३ ह्युलूखलं३, स्वयैवैनं देवतया,—ऽथैषोपा, पृथिव्या
वा एतदोजो वीर्यं३ संभ्रियता, ओजो वा एतद्वीर्यं मध्य३तोऽग्नेर्धीयते, ऽथो मध्ये ज्योति-
रेव चीयते, यद्रिक्तामवेक्षेत क्षोधुको यजमानः स्या,—दथ यत् पूर्णामवेक्षते तथा ह्यक्षोधुको
भवति, सिकताभिः पूरयित३व्या,—ऽग्नेर्वा एतद्वैश्वानरस्य भस्म यत् सिकताः, स्वेनैवैनं
भस्मना प्रीणाति, दध्नः पूरयितव्यो,—र्ग्वै दध्यू,—र्जमेवावरुन्द्धे, घृतस्य पूरयित३व्यं,—
षा वा अग्नेः प्रिया तनूर्यद् घृतं, प्रिययैवैनं त३न्वा समर्धयति, मधोः पूरयितव्यो,—ऽऽ
हास्य प्रजायां मधव्यो जायते व्यृद्ध्यै,—न्द्रियाणि वै पशुशीर्षाण्ययज्ञियान्यमेध्यानि, यच्छि-
द्रेषु हिरण्यशकलान्यव्यस्यतीन्द्रियेणैवैनानि वीर्येण समर्धयति, मेध्यान्येनानि यज्ञियानि करो-
त्य,—र्धं३ वै पुरुषः सहस्रस्य, यच्छन्त्यर्धमितरे पशव,—स्तस्मादेतन्मध्यत उपदधात्य,—भिता
इतराणि, पशोः सवीर्यत्वाया,—ऽथो सायतनत्वाय, यं कामयेत, पशुमान्त्स्यादिति,
तस्य समीचीनानि पशुशीर्षाण्युपदध्यात्, समीच एवास्मै पशूननुपदधाति, पशुमान् भवत्य,—
थ यं कामयेता,—ऽपशुः स्यादिति, तस्य विषूचीनानि पशुशीर्षाण्युपदध्याद्, विषूच एवा-
स्मै पशूननुपदधात्य,—पशुर्भवत्ये,—ता वै साहस्रीरिष्टकाः पश्विष्टका,—स्ताः सोमदक्षः कौश्रेयो
विदांचकार, ताः श्यापर्णायोपदधौ, स सहस्रं पशून् प्राप, प्र सहस्रं पशूनाप्नोति यस्यै-
ता उपधीयन्ते, यन्त्रिष्ठो वै नामै३षोऽग्नि,—स्तस्माच्चिन्वतान्तरा न व्येतवै, यद्वीयात्
प्राणानस्य वियेतो,—रसुगैरुपतिष्ठत, आरण्यानेव पशूञ् शुचमनूत्सृजति ॥ ७ ॥ ९

पुरुषशीर्षमुपदधात्ये,—ष हि पशूना३ं वीर्यवत्तमो, वीर्यमस्मिन् दधात्ये,—कमुपदधात्ये,—
कधास्मिन् वीर्यं दधाति, सौर्या पुरुषशीर्षमभिजुहोति स्वर्गस्य लोकस्य समष्ट्यै, सारी चा
एषा सर्वा मैत्रावरुण्य,—हर्वै मित्रो, रात्रिर्वरुणो, ऽहोरात्रयोरेव प्रतितिष्ठत्य,—र्धर्चाभ्यां
जुहोत्य,—र्ध३ं वा अर्धर्च३चो, ऽसा अर्धर्च३चो, ऽनयोरेव प्रतितिष्ठत्य,—थ यदेकय
ऋचा द्विर्जुहोति तस्मादेकः सन् पुरुषो द्विपाद्, यद्वा एतत्किंचाकर्योनि३ं वा एतत्स्रुक्,—यदेता
अपस्याः सादयति तस्मिन्नेव योनौ रेतो दधात्य,—प३ं वा अबिभे,—दग्निर्मातिधक्ष्यतीति,
सैता इष्टका अपश्य,—दथो आहुः, प्रजापतिरपश्यदिति, ता उपाधत्त, यदेता उपधीयन्ते-

[८] मै. ३,८,१ । तै. ५,२,९—१० । कठ २०,८—९ । क॰ ३२,१०—११ । वा. १३,४४-४५,१५,१६—६० ।
श.ब्रा. १३,५५-५६,१६,८०-८१ ।

ऽस्यां अनुविदाहार्यं, यदिदं तम्,—मिति होवाचेयं, यं एता उपदधाता इत्य,—ग्रादौ भवति यस्यैता उपधीयन्ते, तस्माद्रेतसः सिक्तादेव पशुः संभवति, यदेताश्छन्दस्याः, पशवो वै छन्दांसि, यद्दक्षिणत उपदध्यादभीपतः प्रजा वरुणो गृह्णीया,—दथ यदुत्तरत उपदधात्यपवाहुतं एवा,—ऽथैताः प्राणभृत,—स्तस्मिन् पशौ संभूते प्राणं चक्षुः श्रोत्रं वाचं तानि दधात्य,—श्णया सादयति, पशुं वा एतदाक्रमयति, तस्मात् पशवोऽक्ष्णयाङ्गानि प्रहरन्तो यन्ति, दशभिर्दशभिर्वा अता इष्टकाभिर्ऋषय आर्ध्नुवं,—स्ता ऋद्धीर्ऋध्नोति यस्यैता उपधीयन्ते, ऽथैताः संयतो, रेतो वा एतत् सिच्यते यदग्निश्चीयते, यदेता उपधीयन्ते रेतसः सिक्तस्य संयत्यै, लोकं पृण छिद्रं पृणेत्ये,—षा वा अछिद्रेष्टका, अछिद्रा वा एतया चितयश्चीयन्त, इन्द्राग्नी त्वा बृहस्पतिरित्यो,—जो वै वीर्यमिन्द्राग्नी, ओजसा वा एतद्वीर्येणाग्निश्चीयते, ता अस्य सूददोहसा, इति परुषि परुष्येव रसं दधाति, सोमं श्रीणन्ति पृश्नया इत्य,—न्नं वै पृश्न्य,—न्नमेवावरुन्द्धे, जन्मन्देवानां विशा, इत्याह, प्रजात्या एव, त्रिष्वा रोचने दिव इति, सवनानि वै त्रीणि रोचनानि, सवनचितमेवैनमकरत्नुष्टुब् वा एषा, वाग्वा अनुष्टुप्, प्राणो वै वाग्, यदेषा सर्वा इष्टका अनुसंचरति तस्मात् प्राणः सर्वाण्यङ्गान्यनुसंचरत्या,—ग्नेयी वा एषा वर्णेन स्तेन वा एतच्छन्दसाग्निश्चीयते, नाध्वर्युः सर्वार्तिमार्छति य एवं वेद ॥ ८ ॥ १०

उत्सन्नयज्ञो वा एष यदग्निश्चित्यः, को ह तद्वेद यदेतस्य क्रियते य,—श्विनौ वै देवानां भिषजा अक्लृप्तस्य कल्पयितारौ, यदेता आश्विनीरुपधीयन्तेऽक्लृप्तस्य क्लृप्त्यै, पञ्चोपदधाति, पाङ्क्तो यज्ञो, यावानेव यज्ञस्तमालभ्या,—ऽथो यावानेव यज्ञस्तमवरुन्द्धे,—दथैता आश्विनीर्ऋतव्या अनूपधीयन्ते, रेतसे वा एतत्सिक्ताय ऋतूननुपाधात्, तस्मात् सर्वेष्वृतुषु रेतो हितं, तस्मात् सर्वानृतून् रेतोऽनुप्रजायते, ऽथैता ऋतव्या वायव्या अनूपधीयन्ते, तस्मात् सर्वानृतून् वायुरन्वावरीवर्त्यै,—थैता वायव्या अपस्या अनूपधीयन्ते, तस्मात् पशवो नानाव्रताः सन्तोऽप एवाभि संव्रता,—स्तस्मात् पुरस्तादुपदधाति, चतुर्विधं हि शिरः, प्राणश्चक्षुः श्रोत्रं वाङ्, मूर्धन्वतीभिः सादयति, मूर्धन्योऽसानीति, पञ्च पश्चाभिता उपदधाति, पशोः सचीर्यत्वाया,—ऽथो सायतनत्वाय, तस्मात् पशुः पश्चाद्वरीयान्च् श्रोणिमुत्तर,—स्तस्मादु प्राङ् संहाना, इन्द्राग्नी अव्यथमानामिष्टकां दृंहतं युवमित्य,—न्तरिक्षं वा एषा चिति,—

[ ता अस्य सूददो० .. ऋ ८,६९,३, तै सं ४,२,४,४, तै आ ३,११,६,० ]

रन्तरिक्षमिमाः प्रजा, इन्द्राग्नी वै देवानामोजोभृता, ओजो वीर्यमिन्द्राग्नी, ओजो वा
एतद्वीर्यं मध्यतः प्रजानां धीयते, ऽथैता दिश्या, देवा वै स्वर्गं लोकमायꣳ,—स्ते दिशा
आक्रमन्त, ता अव्लीयन्त, ता एताभिरदꣳहन्, यदेता उपधीयन्ते दिशां धृत्यै, पश्चो-
पदधाति, पाङ्क्तो यज्ञो, यावानेव यज्ञस्तमालभ्य, दशैताः पुरस्तात् सादयति,
दशाक्षरा विराड्, विराट् खलु वै चक्षुर्ज्योतिश्छन्दसां, चक्षुर्वा एतज्ज्योतिः पुरस्तात् प्रशो-
दधाति, तस्मादिदं पुरस्ताच्चक्षु,—रथो अन्नꣳ वै विरा,—डन्नꣳ वा एतन्मुखतो दधाति,
मा छन्दः, प्रमा छन्दः, प्रतिमा छन्द इती,—यꣳ वै मा, ऽन्तरिक्षं प्रमा, ऽसौ प्रतिमे,
—मानेव लोकानुपधत्ते, ऽथो देवछन्दसानि वा एतानि, देवछन्दसान्येवोपधत्ते, द्वादश
द्वादशाभिता उपदधाति, तत् षट्त्रिꣳशत्, षट्त्रिꣳशदक्षरा बृहती, बृहती खलु वै
छन्दसाꣳ स्वाराज्यमानशे, गच्छति स्वाराज्यꣳ यस्यैता उपधीयन्ते, पशवो वै बृहती,
पशवो मध्यमा चिति,—स्तस्मादेतस्यां चित्यामेता उपधीयन्त, आदित्यधामानो वा उत्तरे
प्राणा, अङ्गिरोधामानोऽधरे, मूर्धासि राडिति, य उत्तरे प्राणास्तानेवाभिर्दाधार,
यन्त्री राडिति, येऽधरे प्राणास्तानेवाभिर्दाधार, तदेवाꣳ वावैताः प्राणानाꣳ विधृत्य,
समावद्भाजः सादयति, समानद्भाजो ह्यमी प्राणाः, प्राणानाꣳ विधृत्यै, यं द्विष्यात्
तस्याऽन्यथा सादयेत्, प्राणानस्य मोहयति, प्रमायुको भवति, मूर्धन्वतीभिः सादयति, १२
मूर्धन्योऽसानीति ॥ ९ ॥

त्रिवृद्वतीं पुरस्तात् सादयति, त्रिवृद्धि यज्ञमुखं, मुखतो वा एतद्यज्ञमुखं दधाति,
सप्तदशवतीं दक्षिणतो, ऽन्नꣳ वै सप्तदशो, ऽन्नꣳ वा एतद्दक्षिणतो दधाति,— तस्माद्दक्षि-
णेन हस्तेनान्नमद्यते, तस्माद्दक्षिणोऽर्ध आत्मनो वीर्यवत्तर,—स्तस्माद्दक्षिणमर्धꣳ वया ऽऽस्यन्नु-
पर्यावर्तन्ते, पञ्चदशवतीमुत्तरत, ओजो वै पञ्चदश, ओजो वा एतदुत्तरतो दधाति,—
एकविꣳशवतीं पश्चात् प्रतिष्ठित्यै, त्रिवृद्वतीं पुरस्तात् सादयति, त्रिवृद्धि यज्ञमुखं, मुखतो
वा एतद्यज्ञमुखं दधाति, पञ्चदशवतीं दक्षिणतः सादयति, सप्तदशवतीमुत्तरतः, पशवो
सवीर्यत्वाया,—ऽथो सायतनत्वाय, तस्मादुभाभ्याꣳ हस्ताभ्यामन्नमद्यते, ऽथो वज्रो वै पञ्च-

[ ९ ] मै. ३,८,१—३। तै ५,३ १—१। काठ २०,१०—११। कपि ३१,१२—१३। श[illegible]
[illegible]। सत्य [illegible]।
[ १० ] मै ३,८,६—७। तै ५,३,१—५। [illegible]

दृशो, वज्रेण वा एतद्यजमानो भ्रातृव्यमुभयतो निर्भजत्ये,—कविꣳशवतीं पश्चात् प्रतिष्ठित्यै, प्रतिष्ठा ह्येकविꣳशो, ऽर्कस्य वा एषं विधामनुविधीयते, ऽन्नमर्को, ऽन्नादो भवति यस्यैता उपधीयन्ते, ऽग्नेर्भागोऽसि, दीक्षाया आधिपत्यं, ब्रह्म स्पृतं त्रिवृत्स्तोमा इति, स्पृतो वै नामैता इष्टका, एताभिर्वै प्रजापतिर्यद्यदकामयत तत्तदस्पृणोद्, यद्युदेवैताभिर्यजमानः कामयते तत्तत्स्पृणोत्यें,—कयास्तुवत, प्रजा अधीयन्तेति, सृष्टयो वै नामैता इष्टका, एताभिर्वै प्रजापतिर्यद्यदकामयत तत्तदसृजत, यद्युदेवैताभिर्यजमानः कामयते तत्तत्सृजते, अग्ने जातान् प्रणुदा नः सपत्नानिति, पुरस्तात् सादयति, ये एव जाताः सपत्नास्तानेतया प्रणुदते, प्रत्यजातान् जातवेदो नुदस्वे,—ति पश्चाद्, ये एव जाताः सपत्नास्तानेतया प्रतिनुदते, तद्भ्रातृव्यस्य वा एषं विनोदं,—श्चतुश्चत्वारिꣳशी स्तोमो, वर्चो द्रविणमिति दक्षिणतः सादयति, षोडशी स्तोमा, ओजो द्रविण,—मित्युत्तरतं,—श्चतुश्चत्वारिꣳशदक्षरा वै त्रिष्टुब्, वज्रस्त्रिष्टुब्, वज्रः षोडशी, सव्यापग्रहणो वै वज्रो दक्षिणाप्रहरणः, सव्यापग्रहणꣳ वा एतद्वज्रं दक्षिणाप्रहरणꣳ यजमानो भ्रातृव्याय प्रहरति, पुरीषवतीं मध्यतः सादयति, पुरीषमिव ३हीदं मध्यतः पशोः, पुरीषं मध्यमात्मनः, सात्मानमेवाग्निं चिनुते, ऽथैता विराजो, वाग्वै विराट्, पशवो वा एता इष्टकाः, पशुषु वा एतदुत्तमाꣳ वाचं दधाति, तस्मात् पशुमानुत्तमाꣳ वाचꣳ वदति ॥ १० ॥ १२

[ १५०६ ]

॥ इत्युपरिकाण्डे दादाने नाम द्वितीयः प्रपाठकः ॥ २ ॥

अथ तृतीयः प्रपाठकः।

अथैताः स्तोमभागा, एताꣳ वै बृहस्पतिरसुरेभ्योऽधि यज्ञस्य प्रतिष्ठामाहरद्, यदेता उपधीयन्ते यज्ञस्य प्रतिष्ठित्यै, यज्ञो वै देवानामपद्यत, तं देवाः स्तोमभागाभिः प्रत्युदस्तभ्नुवन्, यदेता उपधीयन्ते यज्ञस्योत्तब्ध्यै, प्रजापतिर्वा एतत् पृथिव्या अग्नेस्तेजः समभरत्, तदग्नेरेवैतत्तेजः संभ्रियते, ऽथैता नाकसदो, नाकꣳ ह वा अस्मा अग्निं चिक्यानाय भवति,

ऋ.ख. १५,२५—२८,१६,१—३। [ अग्ने जातान्प्रणुदा० । अथर्व ७,३४,१। सहसा जातान्प्रणुदा० । अथर्व. ७,३५,१ ]

[ ६ ] मै २,८,८—१० । तै ५,३,५—७ । काठ २१,१—३ । कपि ३१,१७ ।

न वै तत्र किं चन अग्मुपे कं, तस्मान्नाकसदो, नाकसत्सु पञ्चचूडा अध्युपदधाति स्वर्गस्य लोकस्य समष्ट्या, एषं ह त्वेव यजमानः पत्नीभिरग्निनामुष्मिंल्लोके सम्यङ् यस्यैता उपधीयन्ते, ऽथो मध्ये ज्योतिरेव चीयत, एता वा अमुष्मिंल्लोके यजमानस्य पत्नी,—स्तस्मादग्निचिता स्त्री नोपेत्ये,—ष्यो हि सा, पश्चात् प्राचीमुत्तमामुपदधाति, पश्चाद्ध्येतै प्राची पत्न्यन्वास्ते, ऽथैताः क्लृप्तयः, प्रजापतिः प्रजा असृजत, ता एनं सृष्टा अत्यमन्यन्त, स प्रजापतिरेता इष्टका अपश्यत्, ता उपाधत्त, ततो वा अकल्पत, यदेता उपधीयन्ते प्रजानां क्लृप्त्या, अथैता वृष्टिसनयो, वृष्टिर्वै देवेभ्योऽन्नाद्यमपाक्रामत्, तत इदं सर्वमशुष्यत्, ' ते देवाः प्रजापतिमेवोपाधावन्, स प्रजापतिरेता इष्टका अपश्यत्, ता उपाधत्त, तेभ्यो वृष्टिमन्नाद्यमवारुन्ध, यदेता उपधीयन्ते वृष्ट्या अन्नाद्यस्यावरुद्ध्या, आयुषं वा उत्तमा चिति,—रन्या अन्या इष्टका उपदधात्य,—न्यानन्यानेवास्मै पशून् प्रजनयति, प्राणो वै स्वयमातृणाया,—वायव्या, समीची उपदधात्या,—युश्चैव प्राणं च सयुजा अक,—रथो समीचीनाभ्यां ह्यायुषा च प्राणेन च भुङ्क्ते, प्राणो वै स्वयमातृणा, तामुत्तमामुपदधात्य,—न्तमं ह्यायु,—र्यदन्यामुत्तरामुपदध्यात् प्राणमस्यापिदध्यात्, प्रमायुकः स्यात्, तस्मात्तामुत्तमामुपदधात्य,—न्तमं ह्यायुः ॥ १ ॥ १

अथैषा छन्दश्चिति,—श्छन्दांसि वै देवानां ग्रामं पशव,—श्छन्दांस्येवैतया ग्रामं पशून् यजमानोऽवरुन्ध, एतां वै यज्ञसेनश्चैत्र उपदधे, स आनर्ध, ऋध्नोति य एतामुपधत्ते, गायत्रीभिः पुरस्तात् सादयति, तेजो वै गायत्री ब्रह्मवर्चसं, तेज एव ब्रह्मवर्चसमवरुन्धे, तिस्र उपदधाति, त्रिष्टुब्ध्यग्नि,—र्मूर्धन्वतीभिः सादयति, मूर्धन्योऽसानीति, त्रिष्टुब्भिर्दक्षिणत, ओजो वै वीर्यं त्रिष्टु,—बोज एव वीर्यमवरुन्धे, जगतीभिः पश्चा,—ज्जागताः पशवः, पशूनेवावरुन्धे, ऽनुष्टुब्भिरुत्तरतो, ऽनुष्टुब्वै सर्वाणि छन्दांसि, सर्वाण्येवास्य छन्दांस्युपहितानि भवन्त्य,—थ पङ्क्ती,—रथ बृहती,—रथोष्णिहो, ऽथ ककुभो, ऽथ विराज, एवमस्य यथापूर्वं छन्दांस्युपहितानि भवन्ति, द्विपदा उत्तमाः सादयति, द्विपाद्यजमानः प्रतिष्ठित्यै, छन्दांसि वै देवानां ग्रामं पशवो, यजमानायतनं वा आहवनीयो, भ्रातृव्यायतनं धिष्ण्या, यत्पश्चादुपदध्याद् भ्रातृव्यायतने ग्रामं पशून् दध्या,—दथ यत्पुर उपदधाति यजमानायतने वा एतद्ग्रामं पशून् दधात्य,—थोपदधात्य,—ष्टाक्षरा गायत्री, गायत्रोऽग्नि,—र्यावानेवाग्निस्तं चिनुते, ऽष्टौ गायत्रीभिः पुरस्ताद्बहिःपवमाने-

[ १ ] मै. २,८,११ । तै. ५,३,८ । काठ २१,४ । कपि. ३१,१९ ।

स्योपदध्याद्येनं भ्रातृव्योऽतीव स्या,—देकादश त्रिष्टुब्भिः पुरस्तान्माध्यंदिनस्य पवमानस्य,
द्वादश जगतीभिः पुरस्तादार्भवस्य पवमानस्य,—ता एवं पश्चात् पवमानानामुपदध्याद्येनं
भ्रातृव्योऽतीव स्यात्, प्राणो वै पवमानो, ऽग्नेस्तेजः पवमान,—स्तेजसा वा एतद्यजमानो
भ्रातृव्यं प्रभूतं प्रणुदते, तेजसा प्रतिनुदते, तेजसा विनुदते, तद् भ्रातृव्यस्य वा एष
विनोदो, जानुदघ्नं प्रथमं चिन्वानश्चिन्वीत गायत्रीचितं, नाभिदघ्नं द्वितीयं चिन्वानश्चिन्वीत
त्रिष्टुप् चितं, चुबुकदघ्नं तृतीयं चिन्वानश्चिन्वीत जगच्चितꣳ, यंज्यायाꣳसं चित्वा कनी-
याꣳसं चिन्वीत कनीयाꣳसꣳ यज्ञक्रतुमुपेयात्, कनीयसीं प्रजां, कनीयसः पशून्, कनी-
योऽन्नाद्यं, पापीयान्त्स्या,—दथ यत्कनीयाꣳसं चित्वा ज्यायाꣳसं चिनुते ज्यायाꣳसमेव यज्ञ-
क्रतुमुपैति, भूयसीं प्रजां, भूयसः पशून् भूयोऽन्नाद्यꣳ, वसीयान् भवत्ये,—षा वा अग्ने-
रुत्तरवती नाम चिति,—रुत्तरमुत्तरꣳ श्वः श्वः श्रेयान् भवति य एवꣳ वेद ॥ २ ॥ २

पञ्चचितिकः कार्यः, पाङ्क्तो यज्ञः, पाङ्क्ताः पशव,—स्तस्मात् पञ्चचितिकः, पञ्च
चितयः, पञ्च पुरीषाणि, तद्विराजꣳ संपद्यते, तद्यद्विराजꣳ संपद्यते तदस्यैः स्तोत्रं कार्यꣳ,
यत् पञ्चचितिकः स्याद्वियाद्विराजो, यद्दशचितिक इयाद्यज्ञाच्च पशुभ्यश्च, यत्पञ्चचितिक-
स्तेन यज्ञाच्च पशुभ्यश्च नैत्य,—थ यत्पञ्च चितयः पञ्च पुरीषाणि तेन विराजो नैति, तदुभा-
भ्याꣳ वावास्मा एतद्वर्णाभ्यां पशूनवरुन्द्धे, यदेषा पाङ्क्तꣳ यच्च वैराजं, द्व्यक्षरं लोम,
द्व्यक्षरा त्वग्, द्व्यक्षरं माꣳसं, द्व्यक्षरमस्थि, द्व्यक्षरो मज्जा, तद्दश, दशाक्षरा
विराड्, वैराजाः पशवः, पशूनेवावरुन्द्धे, पञ्चचितिकः कार्य, इमे वै लोकास्तिस्र-
श्चितयो, यजमानो द्वे, यजमानꣳ वा एतदेषु लोकेषु प्रतिष्ठापयामुकः, का प्रथमा चितिः,
किं पुरीषमि,—त्याहु,—रियꣳ वाव प्रथमा चिति,—रोषधयः पुरीषं, का द्वितीया चितिः,
किं पुरीषमि,—त्याहु,—रन्तरिक्षꣳ वाव द्वितीया चिति,—र्वयाꣳसि पुरीषं, का तृतीया चितिः,
किं पुरीष,—मित्याहु,—र्द्यौर्वाव तृतीया चिति,—र्नक्षत्राणि पुरीषं, का चतुर्थी चितिः, किं
पुरीष,—मित्याहु,—र्यज्ञो वाव चतुर्थी चिति,—र्दक्षिणा पुरीषं, का पञ्चमी चितिः, किं
पुरीष,—मित्याहु,—र्यजमानो वाव पञ्चमी चितिः, प्रजा पुरीष,—मेतावद्वा अस्ति, यावदे-
वास्ति तत् स्पृणोति, तदवरुन्द्धे, ऽथैता ऋतव्याः, सꣳवत्सरो वा अग्निर्वैश्वानर, एषा वा
अग्नेः प्रिया तनूर्यद्वैश्वानरं,—स्तस्य वा अहोरात्राण्येवेष्टका उपधीयन्ते, द्वे द्वे उपदधाति प्रति-

[ ३ ] मै २,८,१७ । तै. ५,४,२ । काठ २१,५ । कपि. ३२,२० ।

छित्या, अवकामुपास्य सादयति शान्त्या अनिर्दाहाय, चतस्रो मध्यमायां चित्यामुपदधात्य,—प्रतिष्ठितमिव ह्यन्तरिक्षं, प्रतिष्ठित्यै, द्वादशोपदधाति, द्वादश मासाः सꣳवत्सरः, सꣳवत्सरो वा अग्निर्वैश्वानरं, एषा वा अग्नेः प्रिया तनूर्यद्वैश्वानरः, प्रियायाꣳ वा एतत्तन्वामभिश्रीयते, संतनुरकौ निधीयते, ऽग्नेरन्तःश्लेषोऽसीत्ये,—तस्य ह श्लेवाग्निः संश्लिष्टो यस्यैता उपधीयन्ते, सꣳश्लिष्टो वा एतस्याग्निर्यस्यैता उपधीयन्ते, कल्पेतां द्यावापृथिवी इति, कल्पते ह वा अस्मा अग्निं चिक्यानाय, प्र समानानां ज्यैष्ठ्यमाप्नोति य एवꣳ वेद, सꣳ वा एतदग्निमिन्द्धे यश्चिनोति, तं दीपयत्स्येव ऋतव्याभिः ॥ ३ ॥ ३

तमो वै स्वर्गं लोकमन्तरा तिष्ठत्य,—ता वै ज्योतिष्मतीरिष्टका यद्धिरण्यशकलैः प्रोक्षति, विवासयति वा एतद्यजमानाय, ज्योतिरस्मिन् दधाति, सहस्रं भवन्ति, साहस्रो वै प्रजापतिः, प्रजापतिमेवाप्नोति, यावद्वै सहस्रं तावदितोऽसौ लोकः, स्वर्गस्य लोकस्य समष्ट्या, इमा मे अग्न इष्टका धेनवः सन्त्विति, धेनवो वै नामैता इष्टका, एताभिर्वै प्रजापतिर्यद्यदकामयत तत्तददुह, यद्यदेवैताभिर्यजमानः कामयते तत्तदुहे, ऋतुष्ठाः स्थ ऋतावृधा इत्य,—तुष्ठा एवैना अकृत ऋतावृधो, घृतश्चुतो मधुश्च्युता इति, घृतश्चुत एवैना अकृत मधुश्चुता, ऊर्जस्वतीः पयस्वतीरित्यू,—र्जस्वतीरेवैना अकृत पयस्वतीः, स्वधायिनीः कुलायिनीरिति, कुलायिनीर्ह्येता विराजो नाम, कामदुघा इति, यत्र वा अदो देवेभ्यः कामदुघाः काममदुह तदेता अपि दुदुहे, तत् पुष्टिमेवैताभिरवरुन्द्धे, ऽमुत्रामुष्मिँल्लोक इत्य,—मुष्मै हि लोकायाभिश्रीयते, रुद्रꣳ वै देवा यज्ञादन्तरायꣳ,—स्तानायतयाभिपर्यावर्तत, तस्माद्वा अबिभयु,—स्ते देवाः प्रजापतिमेवोपाधाव,—न्त्सं प्रजापतिरेतच् शतरुद्रियमपश्यत्, तेनैनमशमयत्, तद्य एवꣳ वेद वेदाह वा एनं प्रजापति,—र्नैनमेष देवो हिनस्ति, यत्र रुद्रः प्रजाः शमायेत तदेतद् परेत्य,—जुहुयाद्रुद्रꣳ शमयेत्, स्वायाꣳ वा एतद्दिशि स्वेन भागधेयेन रुद्रꣳ शमयति, जानुदघ्नं प्रथमं जुहोत्य,—स्या एवैनं तेन शमयति, नाभिदघ्ने द्वितीय,—मन्तरिक्षात्तेन, चुबुकदघ्ने तृतीयं, दिवस्तेन, त्रिर्जुहोति, त्रयो वा इमे लोका, एभ्यो वा एतं लोकेभ्यो रुद्रꣳ शमयति, त्रिरमुतः पुनः प्रत्यवहारं जुहोति, यानेवेतो रुद्रान् यजति तानमुतोऽवयजति, त्रिरितो जुहोति, त्रिरमुत,—स्तत् षट्, षड्वा ऋतव, ऋतुभ्यो वा एतद्रुद्रमवयजति, समानत्र वा विभाजं जुहोति, समानभाजो हि रुद्राणां भागा, द्वासाहानि जुहोति, द्वामाहैवै स तमश-

[४] मै. २,८,१४। तै. ५,४,२—३। काठ २१,६। कपि. ३७,११। वा १७,७—३। श.ब्रा. ९,१—४।

मयद्, द्रासाहैरेवैनꣳ शमयत्य,—र्कपर्णेन जुहोत्य,—र्केण वा एतदुर्कमवयजति, यत् पात्रेण
जुहुयाद्रुद्रं प्रजास्वन्ववनयेत्, तस्मादारण्येन जुहोति, पशुर्वा अग्निः, स वै तर्ह्येव जायते यर्हि
चीयते, स भागधेयमिच्छति, यथा वत्सो जातः स्तनमिच्छति सोऽध्वर्युं च यजमानं च प्रेक्षते,
यच् शतरुद्रियं जुहोति स्वेनैवैनं भागधेयेन शमयति, यासा उत्तरार्धे जघनार्धे श्रोणिस्तस्याꣳ
होतव्यꣳ, स्वायाꣳ वा एतद्दिशि स्वेन भागधेयेन प्रतिहत्य रुद्रꣳ शमयत्य,—ङ्गिरसो वै
स्वर्यन्तो ऽजायां घर्मं प्रासिञ्च,—न्त्सा शोचन्ती पर्णं परामृशत्, सोऽर्कोऽभवद्, यदर्कपर्णेन
जुहोत्यर्केण वा एतदुर्कमवयजति, यं द्विष्यात्तस्य पशूनाꣳ संचरे न्यस्येद्, यः प्रथम आक्रामति
स आर्तिमार्छति ॥ ४ ॥ ४

अश्मन्नूर्जं पर्वते शिश्रियाणा,—मित्यपः परिषिञ्चन् पर्येति, प्रजापतेर्वा एष रसः, प्रजा-
पतेरेव रसेन परिषिञ्चत्य,—श्मꣳस्ते क्षुदित्य,—श्मानमेव क्षुधार्पयति, मयि त ऊर्गित्या,—त्म-
न्नेवोर्जं धत्ते, यं द्विष्मस्तं ते शुगृच्छत्विति, यमेव द्वेष्टि तमग्नेः शुचार्पयति, त्रिः परिषिञ्चन्
पर्येति, त्रयो वा इमे लोका, एभ्यो वा एतं लोकेभ्योऽग्नेः शुचꣳ शमयति, त्रिः परिषिञ्चन्
पर्येति, त्रिरपरिषिञ्चꣳ,—स्तत् षट्, षड्वा ऋतव, ऋतुभ्यो वा एतदग्नेः शुचꣳ शमयति,
यद्यभिचरेदेतदेव यजुर्वदन्नपरिषिञ्चन् पुनः परीयाद्, यैवाग्नेः शुक्तयैनमर्पयति यद्यभिचरेत् ॥
इदमहममुष्यामुष्यायणममुष्मात् पुत्रममुष्याꣳ दिशि प्रक्षिणामि ॥ इति कुम्भं जघन्यायाꣳ श्रोण्यां
प्रक्षिणीयाद्, यत् प्रक्षिणाति तस्यैवार्तिमन्वार्तिमार्छत्य,—थ यत्रामु गृहास्यायतनमेवास्य छिन-
त्त्या,—ग्नेयपावमान्यां गायत्रं गायते, प्राणो वै पवमानः, शिरो गायत्री, यदाग्नेयपावमान्यां
गायत्रं गायते शीर्षन्वा एतत् प्राणान् दधाती,—यꣳ वै रथन्तर,—मन्तरिक्षꣳ वामदेव्य,—मसौ
बृहत्, त्रिधातुर्वा एतदर्को निधीयत, आत्मा वै वामदेव्यं, प्रतिष्ठा यज्ञायज्ञियं, बृहद्रथन्तरे
पक्षौ, यद्बृहद्रथन्तरे अभितो गायत आत्मन्नेव पक्षौ धत्ते, यज्ञꣳ वै देवानाꣳ रक्षाꣳस्यजिघाꣳ-
सꣳ,—स्तानि बृहद्रथन्तराभ्यामेवापाघ्नत, यद्बृहद्रथन्तरे अभितो गायते रक्षसामपहत्यै, प्रजा-
पतेर्हृदयमपिपक्षे गायते, तस्मादिदमपिपक्ष आत्मनो हृदयमनूचं गायते, तस्मादुनस्थूकꣳ
हृदय,—मर्क्यैः सामभिरर्कं परिष्टुवन्ति, संतनुरर्को निधीयते ॥ ५ ॥ ५–७

वरुणमेनिर्वा एष एतर्ह्यभिद्धस्तिष्ठति, स एनं तर्ह्यधीयात्, तस्य प्राणेन चीयान्, मण्डू-
केनाध्येति, तस्यैव प्राणेन व्येति, न ग्राम्यान् पशून् हिनस्ति नारण्यां,—नवकया विकर्षत्य,
—पाꣳ वा एषा योनिर्यद्वेतुका,—ऽपाꣳ वा एतद्योनिनाग्नेः शुचꣳ शमयत्य,—पाꣳ वा एतद्रूपꣳ

[ ५ ] मै. २,१०,१ । तै ५,४,४ । काठ. २१,७ । वा. १७,१ । काण्व. १८,१ ।

यदेवुक्ता,—ऽपां वा एतद्रूपेणाग्नेः शुचं शमयति, वेतसेनाध्येत्य,—पां वा एतत् पुष्पं यद्वेतसो,
ऽपां वा एतत् पुष्पेणाग्नेः शुचं शमयति, सप्तभिर्विकर्षति, सप्त वै छन्दांसि, छन्दो-
भिर्वा एतदग्नेः शुचं शमयत्य,—थो ब्रह्म वै छन्दांसि, ब्रह्मणा वा एतदग्नेः शुचं शमयत्य,—
ग्निर्वै सृष्टो भागधेयमैच्छत्, स प्रजापतिमेवोपाधावत्, तस्मा अन्नं प्रायच्छत् कृत्वाय, तदस्मै
कमभव,—दन्नं वै कं,—मन्नेन वा एतदग्निमुपचरति कृत्वाय, कं हास्मा अग्निं चिक्यानाय
भवति, पराङ्क्रमध्येति, पराङ् हि पशुः प्रान्तरेथो, पराङ् हि पशुः पशौ रेतो दधात्य,—
न्यांस्ते अस्मत्तपन्तु हेतयः, पावको अस्मभ्यं शिवो भवेत्य,—न्नं वै पावकं,—मन्नेन वा
एतदग्नेः शुचमन्तर्धत्ते, हिरण्यशकलैर्व्याघारयत्य,—मृतं वै हिरण्यं, तेजोऽग्नि,—रमृतेन वा
एतत्तेजो व्याघारयति, पञ्चभिर्व्याघारयति, पाङ्क्तो यज्ञो, यावानेव यज्ञस्तमालभ्य,
द्व्या वै देवा यजमानस्य गृहमागच्छन्ति, यद्दध्ना मधुसंश्लिष्टेन व्यवोक्षति तानेव प्रीणाति,
सर्वमेनु व्यवोक्षति, सर्वानेवैनान् प्रीणाति, तिसृभिर्व्यवोक्षति, त्रिवृद्ध्यग्नि,—स्त्रिष्टुब्भिर्व्य-
वोक्षतीन्द्रियस्यावरुद्ध्या, अन्नवतीभिर्व्यवोक्षत्यन्नाद्यस्यावरुद्ध्यै, दर्भगुरुमुष्टिना व्यवोक्षति,
सं हि प्राजापत्यः, प्राणैर्वा एष व्यृध्यते योऽग्निमध्येति, यदाह, प्राणदा अपानदा
इति, प्राणानेवात्मन् धत्ते, प्रजया च वा एष पशुभिश्च व्यृध्यते योऽग्निमध्येति, प्रजा वै
वर्चः, पशवो वरिवो, यदाह, वर्चोदा वरिवोदा इति, प्रजां चैव पशूंश्चात्मन्धित्वा-
रोहति ॥ ६ ॥ ८

इन्द्रो वै वृत्रमहं,—स्स प्राडपद्यत, स पद्यमाना इन्द्रं षोडशभिर्भोगैः पर्यगृह्णात्, स वा
अग्निनैव वृत्रस्य भोगानपिदह्य वैश्वकर्मणाभ्यां पाप्मनस्तमसो निरमुच्यता,—ऽग्निस्तिग्मेन शोचिषे,-
—ति यज्जुहोत्यग्निना वा एतत् पाप्मनो भोगानपिदह्य वैश्वकर्मणाभ्यां पाप्मनस्तमसो निर्मुच्यते,
नाना जुहोति स्रुक्पोर्नानावीर्यत्वाय, षोडशगृहीतेन जुहोति, षोडशभिर्हि स तं भोगैः पर्य-
गृह्णा,—देतेन वै स वृत्रस्य भोगेभ्यो निरमुच्यत, तत् पाप्मन एवैतेन भोगेभ्यो निर्मुच्यते,
ऽथैतदप्रतिरथ,—मेतेन वै देवा असुरान् प्रत्यजयं,—स्तदप्रतिरथस्याप्रतिरथत्वं, तदप्र३त्ये-

---

[ ६ ] मै. ३,१०,१ । तै ५,४,४—५ । काठ २१,७ । वा १७,२–५,७,११,१५,३६,७० । ऋग्. १८ ३ ६,८, ११,१५,३६,१० ।

[ ७ ] मै. ३,१०,२–३ । तै ५,४,५ । कठ २१,८ । वा १७,६६ । काण्व १८ ६६ । [ अग्निस्तिग्मेन शोचिषा० । ऋ ६,१६,२८, साम० ??, तै सं ४,६ १५ ]

*

चैतेन यजमानो भ्रातृव्यं जयत्ये,—तेनैव याजयेत्, संग्रामे जयति संग्राम,—मेतेनैव याजयेद् भ्रातृव्यवन्त९ यो वास्य प्रियः स्याच्च, भवत्यात्मना, परास्य भ्रातृव्यो भवत्ये,—तेन वै भरद्वाजः प्रतर्दनं दैवोदासि९ समनह्यत्, स राष्ट्रमभवद्, यं कामयेत, राष्ट्रियमयं९ राष्ट्र९ स्यादिति, तमेतेन संनह्येद्, राष्ट्र९ ह भवत्ये,—तेन वै देवा विराजमभ्यजयन्, दशान्याह, दशाक्षरा विराड्, विराजमेवैतेनाभिजयति, दक्षिणतो वै देवाना९ यज्ञ९ रक्षा९स्यजिघा९सन्९,—स्तानि वा अप्रतिरथेनैवापाघ्नत, यद् ब्रह्माप्रतिरथं दक्षिणतो वदन्तीति रक्षसामपहत्यै ॥ ७ ॥ ९

उदेनमुत्तरं नये,—ति समिधा आदधाति, प्रह्रियमाणायैवास्मै भागमक,—स्तिस्र आदधाति, त्रिवृ३द्ध्यग्नि,—रुदु त्वा विश्वे देवा इति, विश्वे ३ह्येदं देवाः स्मो यन्मनु३ष्या, अग्ने भरन्तु चित्तिभिरिति, यस्मा एवं चित्तायाग्निराधीयते तेनैनं चित्तेन समर्धयति, पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरिती,—मा एवैनं पञ्च दिशोऽनु तेजस्विनं करोत्यु,—रथपत्रा ईडयो गृभीत इत्यु,—रथपत्रो ३ह्येष परिगृह्य यज्ञमायन्निति, परिगृह्य ३ह्येत९ यन्ति, हरिकेशः सूर्यरश्मिः पुरस्तादित्य,—सौ वा आदित्यो हरिकेशः सूर्यरश्मिः पुरस्तात्, सविता ज्योतिरुदय९ अजस्र,—मित्याह प्रेष्ठत्या एवं, तस्य पूषा प्रसवे याति विद्वानिति, पशवो वै पूषा, पशूनेवावरुन्द्धे, ततो वाका आशिषो नो जुषन्तामित्या,—शिषा९ वा एष दोह, आशिष एवं दुहा, इन्द्र९ विश्वा अवीवृध,—न्निति वृधन्वत्या यन्ति, वृद्धिमेवोपयन्त्य,—नुष्टुभा यन्ति, वाग्वा अनुष्टुब्, वैश्वदेवी वाग्, वैश्वदेव३वोऽग्नि,—स्तस्मादनुष्टुभा यन्ति, षड्भिराग्नीध्रायन्ति, षड्वा ऋतव, ऋतुभिरेव यन्ति, विमान एष दिवो मध्य आस्त, इत्यश्मान९ सादयति, विमानो ३ह्यसा आदित्यः स्वर्गस्य लोकस्य, सुम्नहूर्यज्ञ आ च वक्षद्, यक्षदग्निर्देवो देव९ आ च वक्षदित्या,—शीर्विषा देवहूर्यज्ञ आ च वक्षद्, यक्षदग्निर्देवो देव९ आ च वक्षदित्या,—शिषु एवैष परिग्रहो, वाजस्य मा प्रसवेनोद्ग्राभेणोदजिग्रभदित्य,—सौ वा आदित्य उद्ग्राभ, एष निग्राभ, उद्यन्वा एतद्यजमानमुद्गृह्णाति, निम्रोचन्नस्य भ्रातृव्यं निगृह्णात्यु,—द्ग्राभश्च निग्राभ-

[८] मं २,१०,४—५ । तै ५,४,६ । काठ २१,८ । वा १२,३१,१७,५०,५३—५९,६१—६४,१२,५६,१५,६१। कप्व १३,३२,१८,५०,५३—५९,६१—६४;१२,५७;१६,८२ । [ उदेनमुत्तरं ( वां ) ० । अथर्व ६,५,१ । हरिकेशः सूर्यरश्मि० ( सूर्यरश्मिर्हरिकेशः )० । ऋ १०,१३९,१; तै ब्रा ४,६,३,३। इन्द्र विश्वा० . पतिम् । ऋ १,११,१, मा. ३४३,८०७, मै सं ४,६,३,४, तै आ २,७,१५,५ । विमान ( नृचक्षा ) पप७ । ऋ १०,१३०,७, तै स ४,६ ३,३ ]

श्वेति, ब्रह्म वा उद्ग्राभः, ब्रह्म निग्राभः, ब्रह्मणा वा एतद्यजमानमुद्गृह्णाति, ब्रह्मणास्य भ्रातृव्यं निगृह्णात्यं,—था. सपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्यतामित्यो,—जो वै वीर्यमिन्द्राग्नी, ओजसा वा एतद्वीर्येण यजमानो भ्रातृव्यꣳ विषूचꣳ विनुदते, चतुर्भिराहवनीयायन्ति, चत्वारि वै छन्दाꣳसि, छन्दोभिरेव यन्त्य,—थो ब्रह्म वै छन्दाꣳसि, ब्रह्मणैव यन्ति ॥ ८ ॥ १०

क्रमध्वमग्निना नाकमित्या,—ह स्वर्गस्य लोकस्य समष्ट्यै, दिवः पृष्ठꣳ स्वर्गत्वेति, पृष्ठेन हि यन्त्यु,—र्जं नो धेहि द्विपदे चतुष्पदा इति, द्विपात्सु चैव चतुष्पात्सु च पशुषूर्जं दधाति,——प्रक्षमाणा भृगुभिः सहेति, भृगवो ह्यग्रे यज्ञेनाभिवमृद्ध्यै, पृथिव्या अहमुदन्तरिक्षमारुह,—मन्तरिक्षाद्दिवमारुहमित्ये,—षाꣳ वा एषं लोकानाꣳ समारोहः, पञ्चभिराक्रमते, पाङ्क्तो यज्ञो, यज्ञेन वा एतद्यज्ञमभ्यारोहत्यप्रतिनोदाय, कृष्णायाः श्वेतवत्सायाः पयसा जुहोत्य,—हर्वै वत्सो, रात्रिर्माता, ऽह्न वा एतद्रात्रिं प्रदापयति, प्रत्त ह वा अहोरात्रे दुहे य एवꣳ वेद, सर्वे वै पशवो नानारूपाः सन्तः पय एवं प्रत्येकरूपा, यदेव प्रत्येकरूपास्तदेनान् प्रत्यवरुन्द्धे, नक्तोषासा, ऽग्ने सहस्राक्ष, सुपर्णोऽसि गरुत्मान्, पृष्ठे पृथिव्याः सीद,—त्येषु वा एतं लोकेषु ज्योतिष्मन्तमग्निं निधत्ते, ऽथो प्राणानाꣳ विधृत्यै, द्वाभ्याꣳ सादयति, द्विपाद्यजमानः प्रतिष्ठित्या, आजुह्वानः सुप्रतीकः पुरस्तादित्या,—ह स्वर्गस्य लोकस्य समष्ट्यै, ताꣳ सवितुर्वरेण्यस्य चित्रामिऽइत्ये,—तꣳ वै कण्वः श्रावयसोऽग्नेर्दोहꣳ विदांचकारा,—ऽग्नेर्वा एष दोहो, ऽग्निꣳ वा एतेनाभिचिदुहे, सर्वान् ह वा अस्मा अग्निर्दोहान्त्सर्वान् कामान् दुहे य एवꣳ वेद, विधेम ते परमे जन्मन्नग्ना, इत्याह, ऋद्ध्या एव, प्रेद्धो अग्ने दीदिहि पुरो न इत्ये,—षा वै कर्णकवती सूर्म्यजस्रं ज्योति,—रजस्रꣳ वावास्मा एतज्ज्योतिर्दधा,—देताꣳ वै वासिष्ठः सात्यहव्यः सत्त्रिणा आसीनान् पप्रच्छ, विद कर्णकवतीꣳ सूर्मीमिति, विद्मेति होतुर्याचनेषु ताꣳ विद्मेति, पशवो वा एतस्याः कर्णाः, पशुमान्भवत्ये,—ताꣳ वै वज्रꣳ शतघ्नीꣳ विप्रा देवा असुरेभ्य उपप्रावर्तयꣳ,—स्तैषाꣳ शततर्हमदꣳहꣳ,—स्तदेतामेव वज्रꣳ शतघ्नीꣳ विप्रीꣳ

[ ९ ] मै २,१०,६ । तै ५,४,७ । काठ २१,९ । वा १७,६५—६७,७०—७९ १२,२,६५,४४ । क प्व १८,६५-६७,७०—७९,१३,२,१६,६६ । [ क्रमध्वमग्निना० । अथर्व ४,१४,२ । पृथिव्या अहमुदन्तरिक्ष० । अथर्व ४,१४,३ । नक्तोषासा समनसा ( वर्णमा० ) । ऋ १,९६,५; तै स. ४,१,१०,४,६,५,२,७,१२,३ । ताꣳ सवितुर्वरेण्यस्य० । अथर्व ७,१५,१ । विधेम ते परमे० । ऋ २,९३ तै स ४,६,५,४ । प्रेद्धो अग्ने० । ऋ ७,१ ३, साम० १३७१, तै स ४,६,५४ ]

यजमानो भ्रातृव्यायोपप्रावर्तयति, अतर्तर्हं ह दध्हत्य,—ग्ने तमद्धे,—ति पङ्क्त्या जुहोति, यजमानो वै पङ्क्ति,—र्यजमानं वा एतद्विराजि प्रतिष्ठापयामुक,—रथो पङ्क्त्यै वाहुत्या यज्ञमालभते, सप्त ते अग्ने समिधः सप्त जिह्वा इत्ये,—तावतीर्वा अग्नेस्तन्वः षोढा सप्त सप्त, यो वा अस्यैता अग्नि चिक्यानो वितर्पयति वि ह तृप्यति, ता एवास्य तर्पयति, चितिं जुहोमि मनसेत्ये,—षा वा अग्नेरद्वाभ्याहुतिर्विश्वकर्मणी, नैनं भ्रातृव्यो दभ्नोत्य,—ग्निं चिक्यानं प्र समानानां ज्यैष्ठ्यमाप्नोति य एवं वेदा,—ऽग्निर्वा अमन्यत, न वा अहमिदमभागधेयं,—स्तेजो यंस्यामीति, तदेतेन भागधेयेनायच्छ,—देतद्वा अग्निरग्निहोत्रं,—मग्निं वा एतेनाग्निर्नियच्छति, सर्वान् ह वा अस्मा अग्निर्दोहान्त्सर्वान् कामान् दुहे य एवं वेद, सं वा एतदग्निमिन्द्धे यश्चिनोति, तं दीपयत्येवाग्निरग्निहोत्रेण ॥ ९ ॥ ११

अथैषोऽग्नये वैश्वानराय द्वादशकपालः, संवत्सरो वा अग्निर्वैश्वानरः, संवत्सरमेव प्रीणात्य,—थो प्राहुतायैवास्मै भागमुक,—राहुतीनां वै प्रतिष्ठित्या यजमानः प्रतितिष्ठत्या,—हुतीनामप्रतिष्ठित्या न प्रतितिष्ठति, यदेतं जुहोत्याहुतीनां प्रतिष्ठित्यै, ताः प्रतितिष्ठन्तीर्यज्ञोऽनुप्रतितिष्ठति, यज्ञं यजमानो, ऽथो कामो वै वैश्वानरो, यत् कामो भवति सं हास्मै स कामो नमति, यत्प्राङ् पर्यावर्तेत देवाविशो मुहेयु,—र्यद्दक्षिणा यमदेवत्या स्याद्, यत्प्रत्यङ् सौ३र्या, यदुदङ् रौद्रं, ऋजु होतव्यः प्रतिष्ठित्यै, सर्वहुतं करोति प्रतिष्ठित्यै, क्षत्रं वै वैश्वानरो, विण्मारुता, यदेतं हुत्वा मारुतान् जुहोति विशं वा एतत् क्षत्राय नियुनक्त्य,—थो विशमेवैनं क्षत्रायानुकां करोत्य,—ग्निमुखान् वै प्रजापतिः पशूनसृजत, पशवो मारुता, यदेतं हुत्वा मारुतान् जुहोत्यग्निमुखानेवास्मै प्रजापतिः पशून् प्रजनयति, सप्तकपाला भवन्ति, सप्त सप्त मारुता गणा,—स्तस्मात् सप्तकपाला, गणेन गणेन जुहोति, गणश एव मरुतः प्रीणाति, योऽरण्येऽनुवाक्यो गणस्तं मध्यतो जुहुयात्, क्षत्रं वा एषं, मरुतां विडितरे, विशो वा एतत् क्षत्रं मध्यमेषं करोति, यदि कामयेत, विशा क्षत्रं हन्यामिति, योऽरण्येऽनुवाक्यो गणस्तमितरैर्गणैर्मोहयेद्, विशा वा एतत् क्षत्रं हन्ति, यदि कामयेत, क्षत्रेण विशं हन्यामिति, योऽरण्येऽनुवाक्यो गणस्तेनेतरान् गणान् मोहयेत, क्षत्रेण वा एतद्विशं हन्ति, तस्य त्रिष्टुभौ याज्यानुवाक्ये स्याता,—मोजो वै वीर्यं त्रिष्टु,—बोजो वा एतद्वीर्यं विशि

[ अग्ने तमद्याश्वं० । ऋ ४,१०,१. साम ४३४,१७११; तै ■ ४,४,४,७ । ]
[ १० ] पाठ ११,१० । वा १७८६ । काण्व १८८६ ।

आदाय क्षत्रायोपिदधाति, यदि कामयेत, क्षत्रेणास्य क्षत्रꣳ हन्यां, प्र स्वादायतनाच्च्यवे- तेति, - योऽरण्येऽनुवाक्यो गणस्तेनाग्निꣳ रथवाहनꣳ व्युदूहयेत्, क्षत्रꣳ वा एष मरुतामग्निꣳ रथवाहनं, क्षत्रियस्य क्षत्रं बिभर्ति, क्षत्रेणैवास्य क्षत्रꣳ हन्ति, प्र स्वादायतनाच्च्यवता, इन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानो इत्ये,—तद्धि देवानामनुवर्त्म, दैवीं च वावास्मा एतद्विशं मानुषीं चानुवर्त्मानीं करोति, सꣳ वा एतदग्निमिन्द्रे यच्चिनोति, तं दीपयत्येव मारुतैः ॥ १० ॥ १२

[ १५१८ ]

॥ इत्युपरिकाण्डे सोमभागो नाम तृतीयः प्रपाठकः ॥ ३ ॥



अथ चतुर्थः प्रपाठकः ।

वसोर्धारां जुहोत्यक्लृप्तस्य क्लृप्त्या अशान्तस्य शान्त्या अनभिजितस्याभिजित्या अनवरुद्धस्याव- रुद्ध्यै, संततं जुहोति प्राणानाꣳ संतत्या एषां लोकानाꣳ संतत्या अन्नाद्यस्य संतत्या, अवि- च्छिन्नं जुहोत्यन्नाद्यस्याविच्छेदाय, यद्विच्छिन्द्यात् प्राणान् विच्छिन्द्याद्, यं द्विष्यात्तस्य विच्छिन्द्या,- —दन्नाद्यमस्य विच्छिन्नस्यक्सुचश्चाभ्रं चेत्ये,—तानि वा अन्नस्य रूपाणि, रूपैरेवान्नमवरुन्द्धेऽग्निश्चा- पृश्चेत्ये,—षा वा अन्नस्य योनिः, सयोन्येवान्नमवरुन्द्धे, वसोर्मे धारास,—दिति वसोर्धारां जुहोति, घृतस्य वा एषा धारा यजमानममुष्मिँल्लोक उपतिष्ठन्ते, द्वादश द्वादशाति जुहोति, द्वादश मासाः संवत्सरः, संवत्सरमेवावरुन्द्धे, ऽर्धेन्द्राणि जुहोत्य,—र्धेन्द्रैर्वै देवा इन्द्रियꣳ वीर्यमसुराणामवृञ्जते,—न्द्रियमेवैतैर्वीर्यꣳ यजमानो भ्रातृव्यस्य वृङ्क्ते, देवाश्च वा असुराश्चा- स्पर्धन्त, ते देवा इन्द्रमब्रुवꣳ,—स्त्वया मुखेनेमान् जयामेति, सोऽब्रवीद्, भागो मेऽ- स्त्विति, वृणीध्वे,—त्यब्रुव,—न्त्सोऽब्रवी,—दर्धो वा अहं देवतानामसानीति, ततो वा अज- यꣳ,—स्तस्मादेषोऽर्धभाग्देवतानाꣳ, यदर्धेन्द्राणि हूयन्ते विजित्या, इन्द्रोत्तमानि भवन्ती,— न्द्रियꣳ वै वीर्यमिन्द्र, इन्द्रिये वा एतद्वीर्ये ततो यज्ञस्य यजमानः प्रतितिष्ठत्यꣳ,—शुश्च रश्मिश्चेति, यज्ञमुखꣳ वा अꣳशुश्च रश्मिश्च, यज्ञमुखमेवावरुन्द्धेऽधिपतिश्चादाभ्यश्चेति, नैनं भ्रातृव्यो दभ्नोत्यग्निं चिक्यानं, प्र समानानां ज्यैष्ठ्यमाप्नोति य एवꣳ वेदै,—ते ग्रहा भवन्त्ये,- —तानि वै यज्ञस्य रूपाणि, रूपैरेव यज्ञमवरुन्द्धे, स्रुचश्च चमसाश्चे,—ति यज्ञायुधानि संभरति,

[ १ ] मै. ३,११,५ । तै. ५४,८ । काठ २१,११ । वा. १८,१९ २१ । काण्व. १९.३१.३३ ।

यज्ञायुधान्येवं संभृत्य यज्ञं प्रयुङ्क्ते, पात्राणि जुहोति, पात्रैर्वा अन्नमद्यते, ऽनुरूपेणैवान्नाद्यमवरुन्द्धे, बर्हिश्च वेदिश्चा,—त्याजीरेवैषां, ऽवभृथश्च स्वगाकारश्चे,—ति प्रतिष्ठित्यै ॥ १॥ १

अग्निश्च घर्मश्चेत्ये,—तद्वा अग्नेर्ब्रह्मवर्चसं, रूपं चैवैतेन ब्रह्मवर्चसं चावरुन्द्धे, तेजस्वी ब्रह्मवर्चसी भवत्यृ,—तुश्च व्रतं चेत्य,—होरात्रे वा ऋतुश्च व्रतं चा,—ऽहोरात्रे एवास्यैतेनाभीष्टे प्रीते भवता, एका च तिस्रश्चेति, देवछन्दसं वा एका च तिस्रश्च, देवछन्दसमेवावरुन्द्धे, चतस्रश्चाष्टौ चेति, मनुष्यछन्दसं वै चतस्रश्चाष्टौ च, मनुष्यछन्दसमेवावरुन्द्धे, देवलोक एवं देवछन्दसेन ऋध्नोति, मनुष्यलोके मनुष्यछन्दसेनै,—का च तिस्रश्च चतस्रश्चाष्टौ चेति, रोहो वा एष एषां लोकानां, संक्रान्तिः स्वर्गस्य लोकस्य, द्व्युत्तरेण वै स्तोमेनादित्याः स्वर्गं लोकमायं,—श्चतुरुत्तरेणाङ्गिरसो, यदेतौ स्तोमौ जुहोति स्वर्गस्य लोकस्य समष्ट्यै, युग्मदयुजौ वा एतौ स्तोमौ मिथुनौ प्रजननाय, रेत एव द्व्युत्तरेण दधाति, रेतो हितं चतुरुत्तरेण प्रजनयत्ये,—का च तिस्रश्चे,—त्यो त्रयस्त्रिंशतस्त्रयस्त्रिंशद्देवता,—स्ता एवास्यैतेनाभीष्टाः प्रीता भवन्ति, चतस्रश्चाष्टौ चेत्य,—ष्टाचत्वारिंशतो, ऽष्टाचत्वारिंशदक्षरा जगती, जागताः पशवः, पशूनेवावरुन्द्धे, त्र्यविश्च त्र्यवी चेत्ये,—तानि वै वयांसि पशूनां, पशुषु एव पशूनेवरुन्द्धा, आयुर्यज्ञेन कल्पते, प्राणो यज्ञेन कल्पता इति, यज्ञस्य वा एषा क्लृप्ति,—र्यज्ञमेवैतदक्लीपत्कल्पद्, वाजाय स्वाहा, प्रसवाय स्वाहेति, त्रयोदश वा एता आहुतय,—स्त्रयोदश मासाः संवत्सरः, संवत्सरं वावास्मा एतदुपदधाति स्वर्गे लोके, तस्मिन्नेव प्रतितिष्ठति, स्तोमश्च यजुश्चे,—त्यन्नं वै स्तोमश्च यजुश्चा,—ऽन्नं वा एतदात्मन्धित्वान्नादो भूत्वा देवक्षेत्रमन्ततः प्रावसत्य,—ग्निं वसु,—स्तस्य वा एषा धारा, सर्वान् ह वा अस्मा अग्निर्दोहान्त्सर्वान् कामान् दुहे य एवं वेद, सं वा एतदग्निरन्नाद्यमिन्द्धे यच्चिनोति, तं दीपयत्येव वसोर्धारया ॥ २ ॥ २

वाजप्रसव्यं जुहोति, वाजं वा एतेनाग्निरन्नाद्यमुदजयद्वाजमेवैतेनान्नाद्यं यजमाना उज्जयत्य,—न्नस्यान्नस्य जुहोति वाजप्रसव्यमि,—रन्नं वै वाजोऽन्नाद्यस्यावरुद्ध्या, उभयं ग्राम्यं चारण्यं च जुहोत्युभयस्यान्नाद्यस्यावरुद्ध्या, औदुम्बरेण स्रुवेण जुहोत्यू,—र्ग्वा उदुम्बर,

[ २ ] मै ३,११,६। तै ५,४,८। काठ २१,११। वा. १८,२२-२९। कण्व. १९,३४—४२।

[ ३ ] मै ३,१२,१—३। तै. ५,४,९। काठ २१,१२। वा १८,३०,३७,३८—४३,४५। काण्व २०,१, ७,८—१३,१५।

ऊर्जोऽवरुद्ध्यै, देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्या२ँ सरस्वत्यो वाचो यन्तुर्यन्त्रेण बृहस्पति२ँ साम्राज्यायाभिषिञ्चामीत्य,—भिषिञ्चेद्, यदि ब्राह्मणो यजेत, बृहस्पतिसवो ह्येष, इन्द्र२ँ साम्राज्यायाभिषिञ्चामीत्य,—भिषिञ्चेद्, यदि राज३न्यो यजेते,—न्द्रसवो ह्येष, कृष्णाजिनेऽब्रह्मवर्चसकाममभिषिञ्चेद्, ब्रह्मणो वा एतदृक्सामयो रूपं,—मृक्सामे ब्रह्मवर्चसं, ब्रह्मवर्चसमेवावरुन्द्धे, बस्ताजिने पशुकामं, पशवो वै बस्ताजिनं, पशूनेवावरुन्द्धे, सूयते वा एषोऽग्नीना२ँ यश्चीयते, स्वेनैवैन२ँ सवेन समर्धयति, देवा ओषधीषु पक्वास्वाजीमयु,—स्ता अग्निरुदजय,—दुर्बरो वा एषोऽभिषेको, ऽन्नस्य वा एतत् सूयते, सवाना२ँ वा एष एको, बृहस्पतिसवो वा एष बार्हस्पत्यो ब्राह्मणो देवतया, स्वेनैव सवेन सूयते, तदाहु,—र्होतव्यमेव, न हि सुपर्वाणः कं चन प्रत्यवरोहतीति, सुपर्वाणो वा एष देवतया योऽग्निं चि,—दृतवो वै सुपर्वाणस्य राष्ट्रमनुविभ्रति, षड् वा ऋतव, ऋतवो राष्ट्रभृतो, यत् षड्भिर्जुहोत्यृतुष्वेवास्य राष्ट्रं प्रतिष्ठापयति, तेऽस्मै राष्ट्रमनुविभ्रति, द्वादशगृहीतेन जुहोति, द्वादश मासाः स२ँवत्सरः, स२ँवत्सरमेवाप्त्वावरुन्द्धे, मिथुना वा एता आहुतय,—स्तस्मै स्वाहा वद, ताभ्यः स्वाहा वदेति, तस्मिन्नेव मिथुने रेतो दधाति, रथशीर्षे सप्तमं जुहोति दिशामभिजित्यै, दिश एवाभिजिता रथेन जीयन्ते, ऽथैते वातहोमा, अग्निचितो वा अमु-ष्याहोरात्रे, अग्निचितेऽय२ँ वायुः पवते, प्राणो वै वायुः, प्राणमेवावरुन्द्धे, ऽञ्जलिना जुहोति, न ह्येतस्यावदानमस्त्य,—थो परिगृहीत्या एव, प्राणो वै वायु,—र्हस्तः प्राणायोपक्लृप्ततम,—स्तस्मादञ्जलिना जुहोति, त्रिर्जुहोति, त्रयो वा इमे लोका, इम एवास्मै लोका वातं धुन्वन्ति, समुद्रोऽसि नभस्वानार्द्रदानुरित्ये,—तानि वै वायो रूपाणि, रूपैरेव वायुमवरुन्द्धे, मारुतोऽसि, मरुतां गण इति, मारुतो हि वायुः, स२ँ वा एतदग्निमिन्द्धे यच्चिनोति, ३
तं दीपयत्येव वातहोमैः ॥ ३ ॥

प्राणो वै गायत्री, गायत्र२ँ हविर्धान,—मपानो जगती, जागत२ँ सदो, व्यानस्त्रिष्टुप्, त्रैष्टुभमाग्नीध्र,—मसुः पृश्नि,—र्मध्ये दिव्यो निहितः पृश्निरश्मे,—त्ययमु२ँ वावास्यैतन्मध्यतः प्राणापानाना२ँ व्यवदधाति प्राणानां धृत्या, अश्मनवमा आग्नीध्रे सादयति, नव वै प्राणाः, प्राणान् वावास्यैतद्यजमानलोके दधात्येकविंशति२ँ होत्रिये प्रतिष्ठित्यै, प्रतिष्ठा ह्येकवि२ँशं,

[ देवस्य त्वा सवितु० । अथर्व १९,५१,२ ]
[ ४ ] मै २,१२,३ । तै ५,४,१० । काठ २१,१२,२२,१। वा १७,६० ( तृ पा ), १८,५२। कण्व १८,६० (तृ पा), २०,२१ । [ पृश्निर्मध्ये दिवो० ( मध्ये दिवो निहितः पृश्निरश्मा ) । ऋ ५,४७,३, तै सं ४,६,३,३ ]

एकादश ब्राह्मणान्त्संस्या, एकादशाक्षरा त्रिष्टुब्, वीर्यं त्रिष्टुब्, वीर्य एव प्रतितिष्ठत्य,—
ष्टाष्टा इतरेष्व,—ष्टाक्षरा गायत्री, ब्रह्म गायत्री, ब्रह्मण्येव प्रतितिष्ठति, षण्मार्जालीये,
षड्वा ऋतव, ऋतवो वा एतं दक्षिणतः पर्यहरन्त, पितरो वा ऋतवो, ऽथो षड्वै छन्दांसि,
छन्दांसि वा अस्यैतद्यज्ञमुखे युनक्ति, सजूरब्दो आयवोभिरित्य,—ता वा अग्रे देवताः पुरस्ता-
द्भागा,—स्ता एव प्रीणात्य,—थो अत्र वै देवानां प्रियास्तन्व,—स्ता एवावरुन्द्धे, सजूरब्दो
आयवोभिरिति, संवत्सरो वा अब्द, ऋतवा आयवानः, संवत्सरं एवास्यैतेना ऋतवो-
ऽभीष्टाः प्रीता भवन्ति, सजूरुषा अरुणीभिरित्यु,—षसमेव प्रीणाति, सजोषा अश्विना दंसो-
भिरित्य,—होरात्रे वा अश्विना, ऽहोरात्रे एवास्यैतेनाभीष्टे प्रीते भवतः, सजूः सूर एतशेनेति,
सूर्यमेव प्रीणाति, सजूर्वैश्वानर इडया घृतेन स्वाहेति, संवत्सरो वै वैश्वानरः, पशवा
इडा, पशवो घृतं, संवत्सरो एवास्यैतेन पशवोऽभीष्टाः प्रीता भवन्ति, दर्भस्तम्बे जुहो-
त्ये,—षा वा अस्यामृतावित्तत्न,—मृते वा एतद्धि श्रीयते, हिरण्यं निधाय जुहोत्य,—मृतत्वमेव
जुहोत्यायतनवत्य,—न्योऽस्नुर्युः स्याद्यदनायतने जुहुयात्, स्वर्गाय वै लोकाय देवरथो युज्यते,
कामाय मनुष्यरथो, ऽग्निं युनज्मि शवसा घृतेनेत्य,—ग्निं वा एतद्युनक्ति, तेन युक्तेन
स्वर्गं लोकं गच्छति, यत् सर्वाभिर्युञ्ज्याद्युक्तोऽस्य यज्ञः स्यादप्रतिष्ठिता आहुतयो, द्वाभ्यां
नाभियुनक्त्याहुतीनां प्रतिष्ठित्यै, ताः प्रतितिष्ठन्तीर्यज्ञोऽनुप्रतितिष्ठति, यज्ञं यजमानस्तिसृ-
भिर्युनक्ति, त्रिवृद्ध्यग्नि,—र्यावानेवाग्निस्तं युनक्ति, तस्मिन् युक्ते सर्वं हव्यं समाधी-
यते, पञ्चभिर्युनक्ति, पाङ्क्तो यज्ञो, यावानेव यज्ञस्तमालभ्य, सं वा एतमेतौ तपतो
यश्चाधत्ते यश्च वैश्वानरो, यदप्सुमतीभ्यां पुरस्ताद्यज्ञायज्ञियस्य संभरति शान्त्या, एषा वै
यज्ञस्य मात्रा यदग्निष्टोमो, भूमं रथन्तरास्यात्तु ऊर्ध्वं क्रियते ॥ ४ ॥ ४

यो वा अग्निं योगा आगते न युङ्क्ते न युञ्जानेषु युङ्क्ते, ऽग्ने युक्ष्वा हि ये तवेत्य,—ग्निं
वा एतद्योगा आगते युङ्क्ते, युङ्क्ते युञ्जानेषु, यो वा अग्निं विमोक आगते न विमुञ्चते न
विमुञ्चमानेषु विमुञ्चते, वि ते मुञ्चामि रशनां वि रश्मीनित्य,—ग्निं वा एतद्विमोक आगते विमु-
ञ्चते, वि मुञ्चमानेषु मुञ्चते, यथा वै पुनराधेयमेवं पुनश्चिति,—र्यो वा आधेयेन ऋध्नोति पुनः

[५] तै० ४,१,० । काठ २२,० । क० ३४।

स आधत्ते, श्रेयोऽग्निं चिक्यानो मन्येत, किं स्यां कृष्यता इति, स एतां पुनश्चितिमुपदधीता, —ऽपि प्रथमं चिन्वानश्चिन्वीता श्रद्धया, ऋभोस्त्येवा, —ऽथो मिथुनत्वाय, याꣳ वा अग्निचिदनिष्टका आहुतिं जुहोति स्रवन्ति सा, ताꣳ स्रवन्तीꣳ यज्ञोऽनुस्रवति, यज्ञꣳ यजमानो, यदेतां पुनश्चितिमुपदधात्याहुतीनां प्रतिष्ठित्यै, ताः प्रतितिष्ठन्तीर्यज्ञोऽनु प्रतितिष्ठति, यज्ञꣳ यजमानो, ऽष्टावुपदधात्य, —ष्टाक्षरा गायत्री, गायत्रोऽग्नि, —र्यावानेवाग्निस्तं चिनुते, ऽष्टौ लोकंपृणा उपधाय पुरीषेणाभ्यूहत्य, —ष्टाक्षरा गायत्री, ब्रह्म गायत्री, गायत्र्यैवैनं छन्दसा ब्रह्मणा चिनुता, एकादश लोकंपृणा उपधाय पुरीषेणाभ्यूहत्ये, —कादशाक्षरा त्रिष्टुब् वीर्यं, त्रिष्टुभैवैनं छन्दसा वीर्येण चिनुते, द्वादश लोकंपृणा उपधाय पुरीषेणाभ्यूहति, द्वादशाक्षरा जगती, जागताः पशवो, जगत्यैवैनं छन्दसा पशुभिश्चिनुत, एषा वा अग्नेरुत्तरवेदि, —रेतं-द्वग्निरुत्तरवेदिमाꣳश्नीयते, योऽस्याग्निः पुरा चितः स्यात्तमन्ववसाय यजेत, यथा वा इदं दीप्यमाने भूयोऽभ्यादधात्येवꣳ वावास्मिन्नेतदभिपूर्वं भूयस्तेजो दधाति, तदाहुः, कः श्रेयाꣳसꣳ विपुलं बोधयिष्यतीति, यद्यजुता आहुस्त्यैवैनꣳ व्यर्धयति, गृहान्वा एष कुरुते श्रेयोऽग्निं चिनुते, यद्वा अन्यतो विन्दते गृहाꣳस्तदाहरति, य इष्ट्या वा पशुना वा सोमेन वा यजेत योऽस्याग्निः पुरा चितः स्यात्तमन्ववसाय यजेत, यथा वा इदमन्यतो वित्त्वा गृहानाहरत्येवं तत्त-दाहुः, पुनर्वा सुवा एतद्यज्ञे क्रियते, यत्रैव क्व च यजेत तदेता एकविꣳशतिमुपधाय यजेत प्रतिष्ठित्यै, प्रतिष्ठा ह्येकविꣳश इति ॥ ५ ॥ ५

समास्त्वाग्न ऋतवो वर्धयन्त्विति, समाभिश्चैवैनमृतुभिश्च समिन्द्धे, स दिव्येन दीदिहि रोचनेनेति, ज्योतिष्मन्तमेवैनं चिनुते, विश्वा आभाहि प्रदिशश्चतस्र इति, तस्मादग्निः सर्वा दिश आभात्य, —मुत्रभूयादध यद्यमस्य बृहस्पते अभिशस्तेरमुञ्चा, इत्यामयाविनः कुर्या, —न्मृत्युर्वै यमो, ब्रह्म बृहस्पति, —र्यावदेव ब्रह्म तेनैनं भिषज्यति, प्रत्यूहतामश्विना मृत्यु-मस्मादित्य, —श्विनौ वै देवानां भिषजौ, तावस्मान्मृत्युं प्रत्यूहता, उद्वयं तमसस्परीति, पाप्मानमेव तमोऽपहत्य स्वर्गं लोकमभ्यारोहत्या, —हुतो वै हैतनामनः सुर्वतरापाप्तेर्यैश्चित्यस्य

[ ६ ] मै २,१२,५—६ । कठ २२,१ । वा २७,१,९—१०,७० २१,३५,१४,३८,२४ । काण्व २९,१,९—१०,२२, ६,३५,४७,३८,२४ । [ समास्त्वाग्ना० ( ०ग्न )। अथर्व २,६,१ । अमुत्रभूयादध० । अथर्व ७,५३,१ । उद्वयन्तमसस्परि स्व० । ऋ १,५०,१०, अथर्व ७,५३,७, तै स ४,१,७,४, ते आ २,४,४,९ ६,६,२, तै आ ६,३,२ ]

होतासीत्, तमब्रुवन्, या अप्सुमतीस्ता इच्छेति, तस्मै वा एता गन्धर्वाप्सरसः प्राब्रुवन्, यदप्सुमतीः सामिधेनीर्भवन्ति शान्त्यै, चतुर्विंशतिमन्वाह, चतुर्विंशत्यक्षरा वै गायत्री, गायत्री यज्ञमुखं, यज्ञमुखमेवालब्धा,—ऽथो चतुर्विंशतिर्वा अर्धमासाः संवत्सरं, एषा वा अस्थिता श्रीर्यत्संवत्सरो, न वा एषं श्रियैलयति, न हास्य श्रीरिलयति, गायत्रीरन्वाह, तेजो वै गायत्री ब्रह्मवर्चसं, तेज एव ब्रह्मवर्चसमवरुन्द्धे, त्रिष्टुभोऽन्वाहौ,—जो वै वीर्यं त्रिष्टु,—ओज एव वीर्यमवरुन्द्धे, यद्गायत्र्यश्च त्रिष्टुभश्च भवन्ति तेनैव तदुभयमवरुन्द्धे, या आग्नेयीरनिरुक्तास्ताः का३र्या, अनिरुक्तमिव ह्येतद्व्यावृत्तं, व्यावृत्तं पाप्मना भ्रातृव्येण गच्छति, ता अग्नीषोमीयस्य पशोः कुर्यात्, को हि देवक्षेत्रे हिरण्यारोक्ष्यतीति, तिस्रो रात्रीर्भूत्वाभिश्रेत३व्या, इत्याहु,—स्त्रिपदा विराड्, विराजमेवाप्नोति षड्रात्रीर्भूत्वाभिश्रेत३व्या, इत्याहुः, षड्वा ऋतवः संवत्सरः, संवत्सरमनु विराडायत्ता, विराजमेवाप्नोति, दश रात्रीर्भूत्वाभिश्रेत३व्या, इत्याहु,—र्दशाक्षरा विराड्, विराजमेवाप्नोति, द्वादश रात्रीर्भूत्वाभिश्रेत३व्या, इत्याहु,—र्द्वादश मासाः संवत्सरः, संवत्सरमनु विराडायत्ता, विराजमेवाप्नोति, चतुर्विंशतिं रात्रीर्भूत्वाभिश्रेत३व्या, इत्याहु,—श्चतुर्विंशतिर्वा अर्धमासाः संवत्सरः, संवत्सरमनु विराडायत्ता, विराजमेवाप्नोति, मासं भूत्वाभिश्रेत३व्या, इत्याहु,—र्मासश एव संवत्सरमाप्नोत्य,—ष्टौ वा एतन्मासो वसवोऽबिभ्रु,—स्त इमं लोकमाजयन् गायत्रीं छन्दो, एकादश रुद्रा३,—स्तेऽन्तरिक्षं लोकमाजयंस्त्रिष्टुभं छन्दो, द्वादशादित्या३,—स्तेऽमुं लोकमाजयन् जगतीं छन्द,—स्त आर्ध्नुव,—न्नृध्नोति य एवं विद्वान्त्संवत्सरमग्निं बिभर्ति, तस्मादाहुः, संवत्सरभृत एवाग्निरित्यु,—पैता आप्रियः प्रजापतिः प्रजाः सृष्ट्वा रिरिचानोऽमन्यत, स एता आप्रीरपश्यत्, ताभिरात्मानमाप्रीणीत,—ऽग्निर्वै प्रजापति,—र्यदेता आप्रियो भवन्त्यग्निमेवैताभिर्यजमान आप्रीणाति, लोमशं वा एतच्छन्दः पशव्यमूनातिरिक्तं प्रजननाय, विराजो भवन्ति, विराड् वै सर्वाणि छन्दांसि, सर्वाण्येवास्य छन्दांस्युपहितानि भवन्ति, ता विश्वामित्रः कुर्यात्, प्राणा वा एता ज्यायसीरिव च कनीयसीरिव च भवन्ति, ज्यायांस इव च ही३मे कनीयांस इव च प्राणाः, प्राणानेवात्मन् धत्ते ॥ ६ ॥ ६

यस्याग्निं हव्योऽनुगच्छति यथा पुत्रो जातः प्रमीयेत एवं तद्, यद्यनुगच्छेत् तमिवोपां पुनः

[७] तै. ५,४,१२। का. २१,१०,७०६; ८,४३,४२,८,३६,२ । कपि. ३,४,४०,१,४,३७,४०,१,३६,१ ।

परीन्धीते,—या वा अग्नेर्योनिः, स्वादेवैनाꣳ योनेः प्रजनयती,—श्वरो वा एषो प्रजनितो३र्योऽग्निं चिनुते ॥ ७

यास्ते अग्न आर्द्रा योनयो याः कुलायिनीर्ये ते अग्न इन्दवो या उ नाभयः ।
ताभिष्ट्वमुभयीभिः सꣳविदानः प्रजानꣳस्त३न्वेह निषीद ॥ ८

इति यदुपार्द्रां योनिमति शान्त्यै, प्रजा वै कुलायं, पशवः कुलायꣳ, यत्कुलायिनीः प्रज्ञात्यै, हविर्भूतो वा एष ३योऽग्निं चिनुते, ३योऽग्निं चित्वान्यस्य स्त्रियमुपैति यथा हविः स्कन्नमेवꣳ स्यात्, यथा हविषे स्कन्नाय प्रायश्चित्तिमिच्छन्त्येवमस्मै प्रायश्चित्तिमिच्छेयु,—र्यद्युपेया-न्मैत्रावरुण्यामिक्षया यजेत, मैत्रावरुणतामेवोपैत्यात्मनोऽस्कन्नत्वाय, पशुर्वा अग्नि,—र्यो वै पशुं पुरस्तादुपचरति हिनस्ति वा एनꣳ स, तस्मात् पुरस्तात् प्रत्यञ्चं नाक्रामति, तस्माद पश्चात् प्राञ्चमुपचरत्यात्मनोऽहिꣳसायै, यो वै यथावृत्तमग्निं चिनुते यथारूपं प्रजाश्च ऋतवश्च कल्पन्ते, या दक्षिणावृतस्ता दक्षिणत उपदधाति, याः सव्यावृतस्ता उत्तरत,—स्सव्यालिखिताः पश्चात् प्राची-रुपदधाति, यथावृत्तꣳ वा एतदग्निं चिनुते यथारूपं प्रजाश्च ऋतवश्च कल्पन्ते, संसत्योऽग्निश्चेत३-व्या, इत्याहुः॥ भूर्भुवः स्वः॥ इति पुरस्तात् स्वयमातृणा, यावदेतद्वाचः सत्यꣳ संसत्यमेवाग्निं चिनुते, प्राणो वै स्वयमातृणा, ऽमृतꣳ हिरण्यꣳ, यद्धिरण्येष्टकामुपधाय स्वयमातृणामुप-दधात्य,—मृतमेवास्य प्राणान् दधाति, तेजोऽसि तेजो मे यच्छे,—ति हिरण्येष्टका उपदधात्ये,—ताभिर्वा इमे लोका विधृता, अथो एताभिरेवाग्निं चिनुत, इमे लोकाः प्रभान्ति, देवा असु-रान् हत्वा मृत्योरबिभयु,—स्ते छन्दाꣳस्यपश्यꣳ,—स्तानि प्राविशꣳ,—स्तेभ्यो यद्यदच्छदयत्तेना-त्मानमच्छादयन्त, तच्छन्दसां छन्दस्त्वं, चितिं चितिमुपधायाग्नेर्या धाम छन्दोऽभिमृशति, स्वामेव देवतामुपप्रविशत्यात्मनोऽहिꣳसायै ॥ श्येनचितिं चिन्वीत स्वर्गकामः, श्येनो वै भूत्वा गायत्र्यमुं लोकमपतत् स्वर्गस्य लोकस्य समष्ट्यै, रथचक्रचितिं चिन्वीत भ्रातृव्यवान्, रथचक्रꣳ वै वज्रं कृत्वा देवा असुरेभ्य उपप्रावर्तयꣳ,—स्तेषाꣳ शततर्हमतृꣳहꣳ,—स्तदेवमेवं वज्रं कृत्वा यजमानो भ्रातृव्यायोपप्रवर्तयति, शततर्हꣳ ह तृꣳहति, प्रउगचितिं चिन्वीत भ्रातृव्यवा,—नुभयतो वै देवानसुराः पर्यायत्ता आसन्, पुरस्तादन्ये, पश्चादन्ये, तान्वा एतेन व्यनुदन्त, तद्भ्रातृव्यस्य वा एष नुनोदो, द्रोणचितिं चिन्वीतान्नकामो, द्रोणेन वा अन्नमद्यते, ऽनुरूपेणैवान्नाद्यमवरुन्द्धे, पश्चाच्चरुर्भवत्यनुरूपत्वाय, श्मशानचितिं चिन्वीत यः

कामयेता,—ऽञ्जसा पितृलोकमुपेयामित्यं,—ञ्जसा पितृलोकमुपैत्यु,—प चान्यं चिन्वीत ग्रामकामो, यथैवैतमुपाचिनोत्येवमस्मै ग्राममुपचिनोति, समूह्यं चिन्वीत पशुकामो, यथैवैतꣳ समूहत्येवमस्मै दिग्भ्यः पशून्त्समूहति ॥ ७ ॥ ९–१२

प्रजापतिर्वा एतमग्रेऽग्निमचिनुत ऋतुभिः संवत्सरꣳ, वसन्तेन पुरस्तादचिनुत, ग्रीष्मेण दक्षिणं पक्षꣳ, वर्षाभिरुत्तरꣳ, शरदा पुच्छꣳ, हेमन्तेन मध्यं, ब्रह्मणैव पुरस्तादचिनुत, क्षत्रेण दक्षिणं पक्षꣳ, विशोत्तरं, पशुभिः पुच्छ,—माशया मध्य,—मेतावद्वा अस्ति, यावदेवास्ति तत् स्पृणोति, तदवरुन्द्धे, स्वर्गाय वै लोकायाग्निश्चीयते, वज्र एकादशिनी, यदेकादशिनीं मिनुयाद्वज्रः पुरस्तादवगृह्णीया,—दस्वर्ग्यः स्याद्, यन्न मिनुयादपशुः स्यादेकयूपे, एकादश पशवो नियुज्या,—स्तेन पशव्या,—स्तेन स्वर्गा, यत्पक्षसंमितां मिनुयात् कनीयाꣳसꣳ यज्ञक्रतुमुपेयात् कनीयसीं प्रजां कनीयसः पशून् कनीयोऽन्नाद्यं, पापीयान्त्स्या,—दथ यद्वेदिसंमितां मिनोति ज्यायाꣳसं चिनुते ज्यायाꣳसमेव यज्ञक्रतुमुपैति भूयसीं प्रजां भूयसः पशून् भूयोऽन्नाद्यꣳ, वसीयान् भवत्ये,—षा वा अग्नेरुत्तरवती नाम चिति,—रुत्तरमुत्तरꣳ श्वः श्वः श्रेयान् भवति य एवꣳ वेद, द्वेधा वा अग्निं चिक्यानस्य यश इन्द्रियं गच्छत्य,—ग्निꣳ वा गच्छत्यारमानꣳ वा ॥ १३

रुचं नो धेहि ब्राह्मणेषु रुचꣳ राजसु धारय ।
रुचꣳ विश्येषु शूद्रेषु मयि धेहि रुचा रुचम् ॥ १४

इति यज्जुहोत्यात्मानꣳ वा एतदग्नेर्यशसार्पयती,—श्वरो वा एष दुश्चर्मा भवितोर्यो ऽग्निमध्येति॥ १५

तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।
अहेडमानो वरुणेह बोध्युरुशꣳस मा न आयुः प्र मोषीः ॥ १६

इति यज्जुहोति शान्तिरेवैषाग्नेर्भिषजयत्को, मेध्यो वा अग्नि,—स्तस्मादग्निचिता पक्षिणो नाशितव्यं नो अग्निविदा, यदश्नीयाच्चमेवाश्नीयात्, स एनमार्तिं निनयेत्, प्रजापतिर्वा एतमग्रेऽग्निमचिनुत ज्यैष्ठ्यकामः, स ज्यैष्ठ्यं महिमानमगच्छ,—ज्ज्यैष्ठ्यं महिमानं गच्छति य एवꣳ विद्वानग्निं चिनुते, प्रजापतिः प्रजाः सृष्ट्वा ता अनुप्राविशत्, सोऽब्रवीद्, यो मेतः

[ ८ ] तै ५,५,७ । कठ २२,४ । क० ३५,६-७ । वा. १८,४८—४९ १९,७ । मान्य २०,१८—१९,०३,७ ।
[ तत्त्वा यामि ब्रह्मणा० । ऋ १,२४,११. तै. २,१,११,६ ]

संचिनुतदुदभ्नुरत्स इति, तं देवाः समानिन्युꣳ,—स्त आर्ध्नुवꣳ,—स्तच्चित्यस्य चित्यत्वं, य
एवꣳ विद्वानग्निं चिनोति प्रजापतिमेव संचिनोत्य,—र्ध्नोति, तस्मादाहुः, प्रजापतिचित एवा-
ग्निरिति ॥ ८ ॥ १७

देवेभ्यो वा अग्निश्चित्यमानेभ्यो न व्यौच्छत्, तेऽस्या आहुतिमजुहवु,—स्तुभ्यमग्ने व्युच्छ,
तथास्मभ्यꣳ निरस्यतीति, तयाग्नये व्यौच्छद्, व्यग्नया औच्छ,—दाहुत्यै व्यौच्छत्, तस्या
आहुत्यै यज्ञेन व्यौच्छद्, व्याहुत्या औच्छ,—द्यज्ञाय व्यौच्छत्, तस्मै यज्ञाय दक्षिणया व्यौच्छद्,
वि यज्ञायौच्छद्दक्षिणायै व्यौच्छत्, तस्यै दक्षिणायै ब्राह्मणेन व्यौच्छद्, वि दक्षिणाया औच्छद्
ब्राह्मणाय व्यौच्छत्, तस्मै ब्राह्मणाय ब्रह्मणा व्यौच्छद्, वि ब्राह्मणायौच्छ,—द्ब्रह्मणे व्यौच्छत्,
तस्मै ब्रह्मणे तपसा व्यौच्छ,—देता वै तपःपरार्ध्या व्युष्टयः, श्वोवसीयस्यस्मै व्युच्छति य एवꣳ
विद्वान् व्युष्टीरुपधत्ते, यो वै यथापूर्वꣳ व्युष्टीर्वेद यथापूर्वमस्मै व्युच्छत्य,—पसो वाव प्रथमा
व्युष्टिर्व्यैवा,—डिति वा आहु,—र्यदोपस्युदेति, यद् व्युच्छति, यदग्निराधीयते, यत्सूर्य उदेति,
यद्धस्ता अवनेनिक्ते, यदश्नाति, यत् पिबत्ये,—ता वै यथापूर्वꣳ व्युष्टयो, यथापूर्वमस्मै
व्युच्छति य एवꣳ विद्वान् व्युष्टीरुपधत्ते ॥ ९ ॥ १८

यो वा अग्निमयोनिमनायतनं चिनुतेऽयोनिरनायतनो भवत्या,—पो वा अग्नेर्योनि,—र्यत् कुम्भेष्टका
उपदधाति योनिमन्तमेवायतनवन्तमग्निं चिनुते, योनिमानायतनवान् भवत्य,—धरसपत्नोऽग्निश्चेत-
व्या, इत्याहु,—रापो वा अग्नेः सपत्नो, यत् कुम्भेष्टका उपदधात्यधरसपत्नमेवाग्निं चिनुते,
ऽधरोऽस्मात् पाप्मा भवत्य,—धरः सपत्नः, शुग्वा अग्नि,—रापः शान्ति,—र्यत् कुम्भेष्टका उपदधाति
शान्त्यै, यत्कुम्भाश्च कुम्भ्यश्च तन्मिथुनꣳ, यद् द्वन्द्वं प्रजात्यै, द्वादशोपदधाति, द्वादश
मासाः संवत्सरः, संवत्सरमेवाप्त्वावरुन्द्धे, नैनारंधरुस्त्रयोदशो भवत्य,—स्ति मासस्त्रयो-
दश,—स्तमेवैतेनाप्त्वावरुन्द्धे, पयसि भवति, यत्पयो, ग्राम्यं तेनान्नाद्यमवरुन्द्धे, यत्क्षीरा-
रा, आरण्यं तेन, तेनैव तदुभयमवरुन्द्धे ॥ १० ॥ १९

[ १५३७ ]

॥ इत्युपरिकाण्डे वसोर्धारीय चतुर्थ प्रपाठक ॥ ४ ॥

र्नाधितिः, स ईश्वरोऽशान्तो यजमानꣳ हिꣳसितो,—र्यच्चूर्णमन्तर्दधाति यजमानस्याहिꣳसायै, देवश्चेद्वर्षान् प्रवृषा इति, देवश्च३द्धचेतान् प्रपद्यते, स्वस्त्युत्तरं अशीयेति, स्व३स्त्यस्य यज्ञस्योदृचमशीयें,—ति वा एतदाहा,—ऽऽपो मा मातरः सूदयन्त्वित्या,—पो हि यज्ञो, घृतेन मा घृतप्वः पुनन्त्विति, देवताभिरेवात्मानं पावयते, विश्वꣳ हि रिप्रं प्रवहन्तु देवीरिति, यदेवास्य रिप्रममेध्यमात्मनि शमलं तदस्मादधि प्रवहन्त्यु,—दिदाभ्यः शुचिरा पूत एमीति, शुचिरेवाभ्यो यज्ञियो मेध्यः पूत उदेति, हविर्वै दीक्षितो, यदा वै हविर्यजुषा प्रोक्षत्यथ हविर्भवति, यद्यजुषा स्नपयति हविरेवैनमक,—रश्नाति, प्राणा वा अशनं, प्राणानेवात्मन्धित्वा दीक्षते, सुषिरो वै पुरुषः, स वै तर्ह्येव सर्वो यर्ह्याशितो, यदाशितो भवति मेध्य एव मेधमुपैति, यथा वा इह दीक्षित एवꣳ वा एष्योऽमुष्मिल्लोक एव वा अत्याशितस्य तिष्ठति, तस्मान्नात्याशितेन भवितव्यं, तन्न सूक्ष्यं,—माशितेनैव भवितव्यꣳ, यथैव कनीयः कनीयोऽश्नीयादेनमश्नीयाद्, यद्धि दीक्षितः सन् कनीयोऽश्नाति तेन दीक्षित आङ्क्ते, ऽभ्यङ्क्ते, वासः परिधत्त, एता वै पुरुषस्य तन्वः, स्वतनूरेव मेध्यमुपैति, नवनीतेनाभ्यङ्क्ते, घृतं देवाना,—माज्यं मनुष्याणां, निष्पक्वं गन्धर्वाणाꣳ, स्वयंविलीनं पितॄणाꣳ, सर्वदेवत्यꣳ वा एतत्, तस्मान्नवनीतेनाभ्यङ्क्ते, दर्भपिञ्जूलीभ्याꣳ समायौति, तेजस्विदुर्भ्यञ्जनमकु,—रथो अ३भ्येवैतद् धारयति मेध्यत्वाय, महीनां पयोऽसीत्या,—ह, महीनाꣳ ह्येतत्पयो, ऽपामोषधीनाꣳ रसा इत्य,—पाꣳ ह्येष ओषधीनाꣳ रसो, वर्चोधा असि, वर्चो मे धेहीत्याशिषमेवाशास्ते ॥२॥ २

मुस्त्वाङ्क्ते भञ्जात्या, ईषीकयाङ्क्ते, शल३ल्या हि मनुष्या आञ्जते, संतूलयाङ्क्ते, ऽपतूलया हि मनुष्या आञ्जते, दक्षिणं पूर्वमाङ्क्ते, सव्यꣳ हि पूर्वं मनुष्या आञ्जते, त्रिरन्यतरत्रिरन्यदाङ्क्ते, ऽपरिमितꣳ हि मनुष्या आञ्जते, न पुनर्निपेधयति, पुनरावर्तꣳ हि मनुष्या आञ्जता, इन्द्रो वै वृत्रमहꣳ,—स्तस्य कनीनिका परापतत्, सो त्रिककुभमगच्छत्, तद्वाञ्जनं त्रैककुभमाङ्क्ते, सत्यꣳ वै चक्षु,—र्नैव वाचं श्रद्दधाति, सत्यमेवालभ्य दीक्षामुपैत्य,—न्तरहं त्वया द्वेषो अन्तरारातीर्दधे महता पर्वतेनेति, पर्वतेन वा एतद् द्वेषोऽरातीरन्तर्धत्ते, चक्षुःपा असि, चक्षुर्मे पाहीत्या,—शिषमेवाशास्त, ऊर्ध्वं चोत्ताञ्चं च पावयत्यू,—र्ध्वश्च ह्ययमर्वाङ् च प्राणो, यं द्विष्यात्तमक्ष्णया पावयेत्, प्राणानस्य मोहयति, प्रमायुको भवति,

[ ३ ] मै १,२,१ । तै ६,१,१ । क. २३,१ । कपि ३५,७ । वा. ४,१६,२४,२७,१,१०,३१,४,४,१०,६ । श.ब्रा. ३,३३,१५,१७,१,२६,४८,४,५,११,१२ । [ चक्षु पा असि० ( चक्षुर्८० ) । अथर्व. ५,१७,६ ]

चित्पतिस्त्वा पुनात्विति, यज्ञो वै चित्पति,—र्वाचस्पतिस्त्वा पुनात्विति, वाचस्पतिरेवैनꣳ यज्ञाय पावयति, देवस्त्वा सविता पुनात्विति, सवितृप्रसूत एवैताभिर्देवताभिरेवैषाऽऽत्मानं पावयते, ऽच्छिद्रेण पवित्रेणेत्य,—सौ वा अच्छिद्रं पवित्रꣳ यत्सूर्यस्य रश्मयो, ऽच्छिद्रेणैवैनं पवित्रेण पुनाति, तस्य ते पवित्रपते पवित्रेणेति, यज्ञो वै पवित्रपति,—र्यज्ञाय खलु वा एषं केमात्मानं पावयते ॥ यज्ञꣳ शकेयम् ॥ इतीन्द्रो वै वृत्रमप्स्वध्यहꣳ,—स्तासाꣳ यद्यज्ञियं मेध्यमासीत्तदुदक्रामत्, ता इमा ओषधयोऽभवꣳ,—स्तासाꣳ वा एतत्तेजो यद्दर्भा, एता वै छुप्ता आपो, यदेवासाꣳ स्तेजस्तदवरुन्द्धे, त्रयीर्वा आपो, दिव्याः पार्थिवाः समुद्रिया,—स्ताः सर्वा इमा विद्यस्थैव, तस्माद्दर्भाः पवित्रं, द्वाभ्यां पावयति, द्वे पवित्रे, द्विपाद्यजमानो, यावानेवास्यात्मा तं पावयति, त्रिः पावयति, त्रिवृत्या हि देवा, अथो त्रयो वा इमे प्राणाः, प्राणोऽपानो व्यानो, यावानेवास्यात्मा तं पावयति, सप्तभिः पावयति, सप्त वै छन्दाꣳसि, छन्दोभिरेवैनं पावयत्य,—थो ब्रह्म वै छन्दाꣳसि, ब्रह्मणैवैनं पावयत्यै,—कविꣳशत्या पावयति, दश हस्त्या अङ्गुलयो दश पाद्या, आत्मैकविꣳशो, यावानेवास्यात्मा तं पावयति, त्रया वै नैर्ऋता, अक्षाः स्त्रियः स्वप्नो, यद्दीक्षते तेनाक्षैश्च स्त्रीभिश्च व्यावर्तते, यो प्रथमो दीक्षितो रात्रीं जागर्ति तया स्वप्नेन व्यावर्तते, यो प्रथमो दीक्षितो वसति यज्ञं तयावरुन्द्धे, योꣳ सोमे क्रीते प्रजां तया, योꣳ श्वःसुत्यया पशूꣳस्तया ॥ ३ ॥ ३-५

आकूत्यै प्रयुजे अग्नये स्वाहेत्या,—कूत्या वा आकूतिर्यक्ष्यते स्य इति, प्रयुजः खलु वा एनꣳ यज्ञाय प्रयुञ्जते, मेधायै मनसे अग्नये स्वाहेति, मेधया हि मनसा यज्ञमश्नुते, दीक्षायै तपसे अग्नये स्वाहेति, दीक्षया हि तपसा यज्ञमश्नुते, सरस्वत्यै पूष्णे अग्नये स्वाहेति, वाग्वै सरस्वती, वाचा व्याहरति, यक्ष्यते स्य इति, पूषा खलु वा एनꣳ यज्ञं प्रापयिष्यदेनमपूपुप,—दापो देवीर्बृहतीर्विश्वशंभुव इत्या,—पो हि यज्ञो, द्यावापृथिवी उरो अन्तरिक्षेति, द्यावापृथिवी वा अन्वन्तरिक्षꣳ यज्ञं उपाश्रित,—स्तत एवं यज्ञमालब्ध, बृहस्पतिर्नो हविषा वृधातु स्वाहेति, ब्रह्म वै बृहस्पति,—र्ब्रह्मणा वा एतत् पुरस्तात् सर्वान् कामानाप्त्वा दीक्षामालभते,—यत्र वा अस्य यज्ञः श्रितो यत्र यत्रोपाश्रितस्ततस्ततो वा एतत् सर्वं ब्रह्मणा यज्ञꣳ संभृत्यालब्ध, न वा एकाहुतिर्दीक्षितं करोति, यदेतानि जुहोति द्वितीयत्वाय, प्रजापतिर्वै यत्किंच मनसा-

[ ४ ] मै १,२,२ । तै ६,१,२ । का २३,२ । क ३५,८ । २ ४७ । क.शा ४,८ ।

❀

अथ पञ्चमः प्रपाठकः ।

आ वा एष प्रजापतये वृश्चते यः शिर उपदधाति नेतराण्यङ्गान्य—स्थिचिदस्य श्मशानचिद्भव-
ति, यदेतां पुरुषचितिमुपदधाति न प्रजापतय आवृश्चते, ऽनस्थिचिदस्याश्मशानचिद्भवति,
षट्त्रिंशतमेता उपदधाति, षट्त्रिंशदक्षरा बृहती, बार्हताः पशवो, बार्हतः पुरुषः,
पुरुषस्य प्रतिमोपधीयते, स श्वोप धीयत, एष ह त्वेव यजमानोऽमुं लोकं नोति प्रमीयते
यस्यैता उपधीयन्ते ॥ १ ॥ १

अथैताः पश्चापश्चीनाः, शिथिरं इव वा अग्निश्चित्यो, यत्पश्चापश्चीना उपदधात्य—मे-
धृत्या अशिथिरत्वाय, पञ्चोपदधाति, पाङ्क्तो यज्ञो, यावानेव यज्ञस्तमालभ्य, भूय-
स्कृदसि, वरिवस्कृदसीत्य—त्रा एवं भूमानं दधाति, भूयान् प्रजया पशुभिर्भवत्य—प्सुषदसि,
गृध्रसदसीति, वयो वा अग्निः, समिक्ष्यमेवैनं वयः करोति, वयो भूत्वा स्वर्गं लोकमेति
यस्यैता उपधीयन्ते ॥ २ ॥ २

चितः स्थ परिचितः स्थेति, शर्कराः परिश्रयति, यच्च शर्करा अपरिश्रित्य सिकता निर्वपे-
द्रेतः सिक्तं परामिच्येता,—ऽथ यच्च शर्करा अपरिश्रित्य सिकता निर्वपति रेतसः सिक्तस्य परि-
गृहीत्यै ॥ ३ ॥ ३

वि वा एष यज्ञश्छिद्यते यदसंस्थितं पशुमुत्सृजन्ति, सं ह स्म वा एतमाशोकेयः स्था-
पयत्या,—ज्येन संस्थाप्य यज्ञस्य संतत्या अविच्छेदाय ॥ ४ ॥ ४

स्वर्गं वा एष लोकमन्वारोहति योऽग्निं चिनुते, यदन्वारोहान् जुहोति स्वर्गमेवैनं लोकं
गमयित्वाय कामं चरति ॥ ५ ॥ ५

[ १५४० ]

॥ इत्युपरिकाण्डे पञ्चमः प्रपाठकः ॥ ५ ॥

---

अथ षष्ठः प्रपाठकः ।

अध्वरादीनां ग्रपाणां विधिः ।

आग्नावैष्णवमेकादशकपालं निर्वपे—दग्निर्वै मेधो देवता, विष्णुर्यज्ञो, देवताश्चैव यज्ञं
चालभ्या,—ऽग्निर्वै यज्ञस्यान्तोऽवस्ताद्, विष्णुः परस्ता—दुभयत एव यज्ञस्यान्ता आलभ्य,
वृद्धा,—नैनं ऋतं इन्द्रायश्रोऽस्त्विति, यदष्टाकपालस्तेनाग्नेयो, यत् त्रिकपालस्तेन वैष्णवो,

[१] वा० ११,१३ ।

यदेकादशकपालः संपद्यते तेनैन्द्रो, ऽग्निर्वै यज्ञस्य पवित्रं, विष्णुर्यज्ञः, पवित्रपूतमेव यज्ञमालब्ध, मेधस्य वा एतद्यज्ञस्य रूपं यत्पुरोडाश,—स्तस्मात् पुरोडाश एव कार्य,—श्चरुं कुर्वन्ति, धेन्वा वै घृतं पयो, ऽनडुहस्तण्डुला,—स्तन्मिथुनं, मिथुनमेवास्य यज्ञमुखे दधाति, तेजो वै घृतं, तेजस एव प्रजायते, पुरुषो वा एष मेधायालभ्यते, पुरुषस्येव ह्येषा प्रतिमा, घृत इव हि रूपं तस्माच्चरुरेव कार्यो, वेदिमति दीक्षते, विन्दा, इति वै वेदिमति दीक्षते, विन्दते ह वै यो वेदिमति दीक्षते, ऽथो यज्ञपथ एवादीक्षिष्ट, वेद्या वै देवा इममसुराणामविन्दत,—मामेव विन्दते यो वेदिमति दीक्षते, ऽथो यज्ञपथमेवालब्ध, प्राचीनवंशं कुर्वन्ति दिशो, यदिमा व्यकल्पयन्निमामेव देवेभ्योऽकल्पय,—न्निमां पितृभ्य, इमामसुरेभ्य, इमां मनुष्येभ्यो, देवतामेव उपैति यो दीक्षते, देवतामेव दिशमुपावर्तते, प्राचीनामेव दिशमुपावर्तते, ऽथो देवक्षेत्रमेव प्रावस्यति परिश्रयन्त्य,—न्तर्हितो वै देवात्क्षया-न्मानुषः क्षयो, मानुषाद्देवैनं क्षयादन्तर्दधत्य,—थो रक्षसामनन्ववायाया,—ति वा एषोऽस्मा-ल्लोकाद्यो दीक्षते, जनं ह्येति, देवलोकमभ्यारोहति, परिश्रयन्त्योऽतिरोकान्कुर्वन्ति, तेना-स्माल्लोकान्नैति, तेनास्मिंल्लोके धृतः पुरस्तात् प्रायणं कुर्यात् स्वर्गकामस्या,—ऽसौ वा आदित्यः स्वर्गो लोको, ऽमुष्यैनमादित्यस्य सामक्षं गमयति, दक्षिणतः प्रायणं कुर्याद्यं कामयेत, पितृलोकं ऋध्नुयादिति,—एषा वै पितॄणां दिक्, पितृलोक एव ऋध्नोति, पश्चात् प्रायणं कुर्यात् प्रजाकामस्य, पश्चाद्धि रेतो धीयते, रेतो दीक्षितो, रेतोऽस्मिन्दधात्यु,—त्तरतः प्रायणं कुर्याद्यं कामयेत, मनुष्यलोकं ऋध्नुयादित्ये,—षा वै मनुष्याणां दिङ्, मनुष्यलोक एव ऋध्नोत्यु,—त्तरतः पुरस्तात् प्रायणं कुर्याद्यं कामयेतो,—भयोर्लोकयोर्ऋध्नुयादित्यु,—भयोर्वा एतल्लोकयो,—रुभयोरेव लोकयोर्ऋध्नोति, सर्वतः प्रायणं कुर्याद्यं कामयेत, सर्वासु दिक्ष्वित्यृध्नुयादिति, सर्वासु दिक्ष्वित्यृध्नोति ॥ १ ॥ १

केशश्मश्रु वपते, दतो धावते, नखानिकृन्तते, स्नाति, मृता वा एषा त्वं,—गमेध्यं वा अस्यैतदात्मनि शमलं तदेवापहते, मेध्य एव मेधमुपैत्य,—प्सु दीक्षां प्रवेशयित्वा देवाः स्वर्गं लोक-मायन्, यदप्सु स्नाति तामेव दीक्षामालभते, ऽथ यदपोऽवभृथमभ्यवैति तां वा एतद्दीक्षां पुन-रप्सु प्रवेशयत्यो,—षधे त्रायस्वैन,—मित्याह त्रात्या एव, स्वधिते मैनं हिंसीरिति, वज्रो वै

[ १ ] मै. ३,६,१। तै. ६,१,१। काठ २२,१३; २३,१। कपि. ३५,७। वा. ४,१-२, ५,४२; ६,१५। काण्व ४,१-४; ५,५४; ६,२०।

दीधेत्तदाधीतयजुर्भिरेवाप्नोत्, तदाधीतयजुषामाधीतयजुष्ट्वं, तद्य एवं विद्वानाधीतयजूंषि जुहोति यदेव किंच मनसा दीध्यज्जुहोति तदाप्नोत्ये,—ते वै यज्ञस्य संभारा, एष ह त्वेव संभृतसंभारेण यज्ञेन यजते यस्यैतानि हूयन्त, एतद्ध स्म वा आहारुणं औपवेशिः, किमु स यज्ञेन यजेत यो यज्ञस्य संभारान्न विद्यादिति, पञ्चभिर्जुहोति, पाङ्क्तो यज्ञो, यावानेव यज्ञस्तमालभ्य, षड्भिर्जुहोति, षड्वा ऋतव, ऋतुष्वेव प्रतितिष्ठति, यज्ञो वै सृष्टः, प्र सामाच्छिनात्, प्र यजु,—स्तं वा ऋगेवायच्छ,—देका वा एनमृगयच्छद्, द्वादश यजूंषि, नव सामानि, तस्मान्नवभिर्बहिष्पवमाने स्तुवते, नव ह्येनं सामान्ययच्छं,—स्तस्माद्वात्संवत्सरविदो द्वादशभिरौद्ग्रभणं जुह्वति, द्वादश ह्येनं यजूंष्यायच्छ,—न्नेतर्हि खलु वा एष सृज्यते यर्हि दीक्षते, यदृचौद्ग्रभणं जुहोति यज्ञं वा एतत् सृष्टमुपायच्छति, तस्मादारुणिविद् ऋचौद्ग्रभणं जुहुत्ये,—का ह्येनमृगयच्छत् ॥ ४ ॥ ६

यज्ञो वै प्रजापतिः, प्राजापत्यमेतच्छन्दो यदनुष्टुब्, यदनुष्टुभा जुहोति स्वेनैवैनं छन्दसावरुन्द्धा, एकया जुहोत्ये,—को हि प्रजापति,—रनिरुक्तया जुहोत्य,—निरुक्तो हि प्रजापतिः, पूर्णया जुहोति, पूर्णो हि प्रजापति,—र्यदनया जुहुयाद्भ्रातृव्याय लोकमुच्छिंष्ये,—दथ यत्पूर्णया जुहोति न भ्रातृव्याय लोकमुच्छिंषत्य,—न्नं वा एतद्रूपं यत् पूर्णं, यत् पूर्णया जुहोति यन्नं वा एतद्रूपं दधाति, विश्वो देवस्य नेतु,—रिति सावित्रं, मर्तो वुरीत सख्य,—मिति पितृदेवत्यं, विश्वो राय इषुध्यती,—ति वैश्वदेवं, द्युम्नं वृणीते,—ति बार्हस्पत्यं, पुष्यसा, इति पौष्णं, सारस्वतः स्वाहाकारः, सर्वदेवत्या वा एषा ऋक्, तस्मादेषैका सत्यौद्ग्रभणं परिबभूव, सर्वाभ्यो देवताभ्यो यज्ञ आलभ्या, इत्याहुः, सर्वदेवत्या वा एषा ऋग्, यदेतया ऋचौद्ग्रभणं जुहोति सर्वाभ्यो वा एतद्देवताभ्यो यज्ञमालभते, ऽनुष्टुम्मो वा एतस्याः सत्यास्त्रीण्यष्टाक्षराणि पदान्येकं सप्ताक्षरं, यत्सप्ताक्षरं तस्य चत्वार्यक्षराण्येकस्मिन् पद उपयन्ति, त्रीण्येकस्मिन्, यत्र चत्वार्युपयन्ति सा जगती, यत्र त्रीणि सा त्रिष्टुब्, यदष्टाक्षरं तेन गायत्री, यदनुष्टुप्तेनानुष्टुप्, सर्वैरेवास्य छन्दोभिर्हुतं भवति, छन्दःप्रतिष्ठानो वै यज्ञ,—श्छन्दःसु वावास्यैतद्यज्ञं प्रतिष्ठापयामकः, स्वाहाकारेण खलु वा एषा पङ्क्तिः, पाङ्क्तो यज्ञः पङ्क्तिप्रायणः पङ्क्त्युदयनः, पङ्क्तिप्रायणमेवास्य यज्ञं पङ्क्त्युदयनमक,—रथो

[ ५ ] मै १,२,७ । तै ६,१,७ । काठ ७३,७ । कपि ३५,८ । वा. ४८,११,६७,२२,२१ । क १२. ४,९;१२,६८,१४, २१ । [ विश्वो देवस्य० स्वाहा । अ. ५,५०,१. तै. सं. १,०,७,१;४ ३,१,१ ]

वाग्वै छन्दाꣳसि, वाचꣳ वा एतन्मध्यत आप्त्वावरुन्द्धे, तस्मादियꣳ वाङ् मध्यतो वदति, मध्यतो ह्रीयꣳ वाक्, प्रजापतिर्वै स्वां दुहितरमभ्यध्यायदुषसं, तस्य रेतः परापतत्, तद्देवा अभिसमगच्छन्त, तस्माद्दीक्षितो न ददाति, न पचत्य, थैनमभिसंगच्छन्ते, तदुदगृभ्णꣳ, स्तदौद्ग्रभणस्यौद्ग्रभणत्वं, तेन यज्ञमतन्वन्त, यज्ञो यदग्रे व्यभवत् स त्रेधा व्यभवत्, स वा ऋक्ष्वेव तृतीयेनाश्रयत, सामसु तृतीयेन, यजुःषु तृतीयेन, या वा अस्य प्रिया तनूरासीत् तया यजुरश्रयतो, च्चैरृचा क्रियत, उच्चैः साम्नो, पाꣳशु यजुषा, यज्ञस्य ह्यत्र प्रिया तनू,-यद्यजुषोच्चैः कुर्याद्यज्ञस्य प्रियां तन्वमुद्धृतां कुर्या, दब्रह्मवर्चसी स्यात्प्रमायुकः ॥ ५ ॥ ७

आहिताग्निर्वा एष सन्नग्निहोत्रं जुहोति, न दर्शपूर्णमासौ यजते, तथा आहुतिभाजो देवतास्ता अनुध्यायिनीः करोति, कर्शयत आत्मानं, तेनैवास्य तद्धुतं भवति, देवा असुरान् हतेभ्यो लोकेभ्यः प्राणुदन्त, तेषामसवो मनुष्यान् प्राविशꣳ, स्तदिदꣳ रिप्रं पुरुषेऽन्त, र्यो कृष्णमिव चक्षुष्यन्तं, स्तत्प्राश्नीया, दसुर्यमेवापहते, यदा वै पुरुषे न किंचनान्तर्भवति, यदास्य कृष्णं चक्षुषोर्नश्यत्य, थ मेध्यो, यदि कुर्यान्नक्तं कुर्या, दसुर्या वै रात्रि, रसुर्यमेवासुर्ये क्रियते, वाचꣳ वा एतद्दीक्षयन्ती, ति ह स्माहारुण औपवेशि, र्य उताज्ञानोऽभ्यज्ञानोऽथ दीक्षितवादꣳ वदति स वाव दीक्षित इति, सायं प्रातर्वै मनुष्याणां देवहितमशनमतिनीय सायमशनमतिनीय प्रातरशनꣳ व्रतꣳ व्रतयति, मानुषस्य व्यावृत्त्या, अदन्वी, ति वै गा आहु, रश्नन्वी, ति मनुष्यान्, जुहुधी, ति देवेभ्यो, ऽभवा एतमाहुः॥ व्रतमुपेहि व्रत्य॥ इति, व्रतꣳ ह्येतस्य, व्रतेन यज्ञः संततो, व्रतेनैव यज्ञꣳ संतनोत्य, थर्धी वा ऋक्सामे यज्ञादास्तां, तयोर्वै महिमाना आस्तां तौ अपिनिधाय यज्ञमुपावर्तेतां, तौ महिमाना अहोरात्रे अभवतां, तयोर्वा एतद्रूपꣳ यत् कृष्णाजिनस्य, यच्छुक्लं तदह्नो रूपꣳ, यत् कृष्णं तद्रात्रे, स्तौ वा एतन्महिमाना अन्वारभते संपारणाय, सं मा पारयता इत्य, होरात्रे मिथुनꣳ समभवतां, तयोस्तेजोऽपाक्रामत्, तत् कृष्णं प्राविशत्, तद्वा एतदन्वारभते, द्यावापृथिवी मिथुनꣳ समभवतां, तयोर्वीर्यमपाक्रामत्, तत् कृष्णं प्राविशत्, तद्वा एतदन्वारभते, यथा वा इदं नावं पारं तरिष्यन्नारोहत्येवꣳ वा एतदृक्सामे आरुक्षत्, ते एनमा यज्ञस्योदृचः संपारयतो, यतो वै लोमानि कृष्णाजिनस्य ततो यज्ञो, यतो यज्ञस्ततो देवता, यद्बहिर्लोमं पर्यूर्णुवीतान्तर्हितो

[ ६ ] मै १,२,२ । तै ६,१,३ । काठ २३,२ । कपि ३५,८ । वा ४,९—१०,२,६२,१८,५२;१९,७,२०,२,२६, २१,३७,२०,२८,१६। शत. ४,१०-१२ २०,०३,२२,६,९२;२६,२१,२७,१९,२८,१६ ।

दीक्षितो यज्ञात्स्याद्, यदन्तर्लोमपन्तर्हितो यज्ञो देवताभ्यो, द्वे विषूची प्रतिमुञ्चते, अनन्तर्हितो दीक्षितो यज्ञाद्भवत्य,—नन्तर्हितो यज्ञो देवताभ्यो, यद्येकं स्यादन्तं प्रतिमुञ्चेत्, तेनैव तदुभयमाप्नोति, हविर्वै दीक्षितो, यदन्यत्र कृष्णाजिनादासीत यथा हविः स्कन्नमेवं स्याद्, यथा हविषे स्कन्नाय प्रायश्चित्तिमिच्छन्त्येवमस्मै प्रायश्चित्तिमिच्छेयु,—श्छन्दांसि च वा एष देवताश्चाभ्यारोहति, तान्येनमीश्वराणि प्रतिनुदो, यदाह, नमस्ते अस्तु, मा मा हिंसीरिति, नमस्कारो वा एषोऽप्रतिनोदाय, देवता वै यज्ञस्य शर्म, यज्ञो यजमानस्य, यदाह, विष्णोः शर्मासि, शर्म मे यच्छेति, देवता वा एतद्यज्ञस्य शर्माक,—यज्ञं यजमानस्य, प्रोर्णुते, प्रावृत इव हि दीक्षितो, ऽथो एतद्धि हि दीक्षितस्य रूपं यत् प्रावृतं, तस्मात् प्रोर्णुते, . वासः परिधत्ते, सर्वदेवत्यं वै वासः, सर्वाभिर्वा एतद्देवताभिरात्मानं परिश्रयन्ति ॥ ६ ॥ ८–१०

यज्ञस्य वै सृष्टस्योल्बमन्ववलम्बत तद्वासः क्षौममभवत्, तस्मात् क्षौमेण दीक्षयन्ति यज्ञस्य सयोनित्वाय, प्राचीनमात्रा पत्नी दीक्षयन्ती,—न्द्रस्य वै प्राचीनमात्रे,—न्द्रियं स्त्रियाः प्रजा, यत् प्राचीनमात्रा पत्नी दीक्षयन्तीन्द्रियमस्यां दधाति, योनिर्वै दीक्षितस्य दीक्षितविमितं, जरायु कृष्णाजिनं,—मुल्बं दीक्षितवासो, नाभिर्मेखला, गर्भो दीक्षितः, स्वं वा एतद्योनिं दीक्षित आप्नुयेत्, तस्माद्दीक्षितेन दीक्षितविमितान्नानृताभिः क्रम्य,—मेष ३ ह्येतस्य योनि,—रेतो ३ ह्येषोऽधि प्रजायते गर्भो दीक्षितो, यदेतं आविःकुर्वीत दुश्चन्तो गर्भा जायेरन्, यदनृतं समयेत तेजोऽस्य परापातुकं स्यात्, तस्मान्नानृतं स्मेत३व्यं तेजसोऽपरापाताया,—ऽजातो वै पुरुषः, स वै यज्ञेनैव जायते, स वै तर्ह्येव जायते यर्हि दः सोमे क्रीते प्रोर्णुते, इतोऽग्रे प्रोर्णुते, ऽथो ह्यग्रे पुरुषो जायते, स वै तर्ह्येव सर्वो जायते यर्हि३दोऽपोऽवभृथमभ्यवैति, तर्हि स तस्मात् सर्वो निर्मुच्यते, त्रिवृता वै स्तोमेन प्रजापतिः प्रजा असृजत, यत् त्रिवृन्मेखला भवति प्रजननाय, त्रिवृद्धि वज्र उदरं वृत्रः पाप्मा क्षुद् भ्रातृव्यः पुरुषस्य, यन्मेखला पर्यस्यते वज्रमेव सपत्नाय भ्रातृव्याय प्रहरति, यं द्विष्यात्तं तर्हि मनसा ध्यायेद्, वज्रमेवास्मै प्रहरति, स्तृणुत एवा,—ऽङ्गिरसो वै स्वर्यन्तो यत्र मेखलाः संन्यास्यंस्ततः शरोऽजायत, तस्माच्छरमेख्य,—र्गो ओषधया, ऊर्जं वा एतन्मध्यत आत्मनो धत्ते प्रजानां च, योक्त्रेण

---

[ नमस्ते अस्तु । अथर्व. १,१३,१; ११,४,८ ]

[७] तै ६,१,३ । श० ३,२–४ । का। २३,१ ।

पत्नी संनह्यते, मेखलया दीक्षितो, ऽथो मिथुनत्वायो,—र्जꣳ वै पुरुषस्य नाभिमेध्य,—मवा-
चीनममेध्यꣳ, यन्मेखलां पर्यस्यते मेध्यस्य चामेध्यस्य च विधृत्यै, देवताभ्यो वा एष मेधा-
यात्मानमालभते यो दीक्षते, वध्रीत इव वा एतदात्मानꣳ यन्मेखलां पर्यस्यते, तस्माद्वा
एतस्यान्नमनाद्यं,—मार्ति इव ह्येष वद्धं,—स्तस्माद् बद्धस्यान्नमनाद्यꣳ, यथा वा इहे गरगीरेवꣳ
वा एषोऽमुष्मिंल्लोके यो दीक्षितस्यान्नमत्ति, यज्ञेन ह्येवास्य तता उन्मुक्ति,—र्हविर्वै दीक्षितो,
यदस्य जुहुयात्तमेव जुहुयात्, प्रमायुकः स्यात्, संतर्भ्यो वा एष देवताभ्य आव्रायते यो
दीक्षते, यदस्य जुहुयाद्यज्ञमस्य विदुह्या,—दुपधीतोऽस्य यज्ञः स्यात्, तꣳ वा एतदागते
काले सर्वꣳ संस्फीतꣳ यज्ञं देवताभ्यो दुहेत्, त्रेधा वा एतस्य पाप्मानꣳ विभजन्ते यो
दीक्षते, ह्योऽस्यान्नमत्ति स तृतीयꣳ, योऽस्याश्लीलं कीर्तयति स तृतीयꣳ, या एनं पिपी-
लिका दशन्ति तास्तृतीयं, तस्माद्वा एतस्यान्नमनाद्यं, तस्मादस्याश्लीलं न कीर्तयितव्यं,
तस्माद्दीक्षितवासोऽभर्तव्यं,—मंत्र हि ताः पिपीलिका या एनं दशन्ति ॥ ७ ॥ ११

दक्षिणा वै देवेष्वासीद्, यज्ञोऽसुरेषु, तां दक्षिणाꣳ यज्ञोऽभ्यकामयत, तामभिपर्या-
वर्तत, ताꣳ समभवत्, स इन्द्रोऽवेद्, यो वा अस्या योनेः संभविष्यति स इदं भविष्यतीति
तामिन्द्रः प्राविशत्, तता इन्द्रः समभवत्, तता इन्द्रोऽजायत, स जायमानोऽवेद्, यो
वा अस्या योनेरन्यो मत्संभविष्यति मादृक्संभविष्यतीति, तया सहोपवेष्टयन्नजायत, यन्न्यवेष्टय-
त्तस्मान्निवेष्टिता, यन्निवेष्टयमाना श्यावाभवत् तस्मात् कृष्णे,—न्द्रं च वा एष प्रेप्सति दक्षिणां
च—न्द्रस्य च खलु वा एतद्योनिमालभ्य दक्षिणायाश्चात्मान,—मथो सयोनिमेव यज्ञमालभते,
कृषिꣳ सुसस्यामुत्कृधा इति, विषाणया भूम्यामुपहन्ति, कृषिमेवास्य सस्येन समर्धयति,
यजुषा कण्डूयते, यजुषा हि मनुष्याः कण्डूयन्ते व्यावृत्त्यै, यजुषा कण्डूयते, तस्मात् प्रजा
अपामंभाविष्णवः, पामंभाविष्णवः प्रजाः स्युर्यद्यजुषा कण्डूयेत, सुपिप्पला ओषधीस्कृधी,—
ति, शिरः कण्डूयता, ओषधीरेव फलं ग्राहयति, तस्मादोषधयः शीर्षन् फलं गृह्णन्ति,
वाग्वै सृष्टा चतुर्धा व्यभवत्, ततो या अत्यरिच्यत सा वनस्पतीन् प्राविशत्, सैषा
याक्षे या दुन्दुभौ या तूणवे या वीणायां दण्डं प्रयच्छति तामेवास्मै वाचं प्रयच्छत्य,—
थो वज्रमेवास्मै प्रयच्छति गोपीथाया,—ऽस्यदुम्नं प्रयच्छत्ये,—वावती ह्रीयꣳ वाग्वदत्य,—थो

[ ८ ] मै. ३,२,२ । तै. ६,१,३-४ । काठ २३,४—५ । कपि ३६,१—२ । ता २१,७९-८७,९३,९४,९८,१—११,
२४—३४,४,६ । काण्व. १३,३०—४६,९५,६६,३०,१—११,२४,—३४,४,७ ।

एतावती हि वाचो वीर्यं क्रियते, यद्वर्षीयाꣳसं प्रयच्छेत् स्वाꣳ वाचं मैत्रावरुणो विभजेत्, ताꣳ श्वःसुत्यायां मैत्रावरुणाय प्रयच्छति, ताꣳ श्वो भूते मैत्रावरुण ऋत्विग्भ्यो विभजति ॥ होतर्यज पोतर्यज नेष्टर्यज ॥ इति सा सह वषट्कारेणाहवनीयं गच्छति, तां पुरोऽध्वर्युर्विभजति ॥ होतर्यज पोतर्यज नेष्टर्यज ॥ इत्यध्वर्युः पुरो वाचꣳ विभजति, मैत्रावरुणः पश्चात् ॥ स्वाहा यज्ञं मनसा ॥ इति मनसा यज्ञमभिगच्छन्ति, तत एवं यज्ञमालभ्य, स्वाहा दिवः स्वाहा पृथिव्या इति, द्यावापृथिवी वा अन्वन्तरिक्षꣳ यज्ञ उपाश्रित,—स्तत एवं यज्ञमालभ्य, स्वाहोरोरन्तरिक्षादित्य,—न्तरिक्षꣳ वै यज्ञो, यदि वातो यदि वा पर्जन्यस्तत एवं यज्ञमालभ्य, स्वाहा वातात्परिगृह्णामि स्वाहेत्य,—यꣳ वाव यः पवत एष यज्ञस्तमेवालभ्य, वाचꣳ यच्छति, यज्ञꣳ वा एतद्यच्छति, यद्वाचꣳ विसृजेद्यज्ञꣳ विसृजेत्, तदाहुः, पुनर्दीक्षयित्वा वाग्यन्तव्येति, यत् पुनर्दीक्षयेदाहुतीरतिरेचयेद्, वैष्णवीमनूच्य वाग्यन्तव्या, विष्णुर्वै यज्ञो, यज्ञमेवालभ्या,—ऽऽग्नावैष्णवीमनूच्य वाग्यन्तव्या, ऽग्निर्वै सर्वा देवता, विष्णुर्यज्ञो, देवताश्चैव यज्ञं चालभ्य, सारस्वतीमनूच्य वाग्यन्तव्या, वाग्वै सरस्वती, वाचो यज्ञः संततो, वाचैव यज्ञꣳ संतनोति, बार्हस्पत्यामनूच्य वाग्यन्तव्या, ब्रह्म वै बृहस्पति,—र्ब्रह्मणा यज्ञः सꣳहितो, ब्रह्मणैव यज्ञꣳ संदधाति ॥ ८ ॥ १५-१८

दीक्षितोऽयमसा आमुष्यायणः ॥ इत्युद्वदति वा आह, प्रियो वै देवानां दीक्षितो, देवेभ्य एवैनं प्राह, त्रिराह, त्रिपत्या हि देवा, अथो त्रयो वा इमे लोका, एभ्य एवैनं लोकेभ्य आवेदयति, तस्माद्दीक्षितं दूराच्छृण्वन्त्ये,—भ्यो ह्येनं लोकेभ्य आवेदयति, नक्षत्रं दृष्ट्वा वाचꣳ विसृजते, द्वौ वा ऋतू, अहश्च रात्रिश्चा,—ऽन्यमेवं ऋतुꣳ संप्राप्य वाचꣳ विसृजते, व्रतं चरते,—ति वाचꣳ विसृजते, व्रतꣳ ह्येतस्य, व्रतेन यज्ञः संततो, व्रतेनैव यज्ञꣳ संतनोति, देवीं धियं मनामहा, इति यजुषा हस्ता अवनेनिक्ते, यजुषा हि मनुष्या अवनेनिजते व्यावृत्त्यै ब्रह्मणः सदेवत्वाया,—ऽयो आपो मे दीक्षां नैत्समुष्णानित्य,—न्नꣳ वै मनुष्येभ्य उदक्रामत्, तद्देवा मनुष्येष्वादिधीर्षꣳ,—स्तदापोऽब्रुवन्, वयꣳ च एताꣳ शुन्धामा,—ऽथोपावर्तस्वेति, ततोऽन्नं मनुष्यानुपावर्तन्त, तदिदमन्नं मनुष्येषु धृतं, तस्माद् ब्राह्मण आहार्यो, आहुते हस्ता अवनेनिजीता,—ऽन्नाद्यस्यावरुद्ध्या, अथो अन्नाय वा एत-

[ ९ ] मै. १,९,३ । तै ६,१,४ । कण्व. २३,५—६ । श. ४.११,१६,६,२७ । कात्य. ४,१५—१६,२१—२२,६, ३९—४० ।

द्वात्मानं पावयते, ये देवा मनुजाता मनोयुजा, इति व्रतꣳ व्रतयत्य्,—एते वै देवा मनुजाता
मनोयुजो यदिमे प्राणा, एषां वा अस्मिन्नेतर्हि देवता, तां प्रीणाति, तस्माꣳ हुतꣳ व्रतयति,
यदेतोऽन्यथा व्रतयेत् प्राणैरेनꣳ व्यर्धयेत्, प्रमायुकः स्यात्, त्वमग्ने व्रतपा असी,—ति
वदेत्स्वप्स्यन्त्सुप्त्वा वा प्रबुध्य, यदि वा दीक्षितवादꣳ वदे,—दग्निर्वै देवानाꣳ व्रतपति,—
स्तस्मादेवाधि व्रतमालभते, नोत्तानः शयीत, यदुत्तानः शयीतेमे लोका प्रयेयु,—र्नाग्नेरधि
पराङ् पर्यावर्तेत, यत् पर्यावर्तेत यज्ञात् पर्यावर्तेत, नान्यत्रदीक्षितं दीक्षितविमितान्त्सूर्योऽभिनि-
म्रोचे,—न्नाभ्युदियाद्, दीक्षितव्रतमेव तद्, यज्ञो वै देवानां न समभवत्, स भूत्या समभाव-
यन्, यद्भूतिꣳ शृनुते यज्ञस्य संभूत्यै, रास्वेयत्सोमे,—ति यद्ब्रूया,—देतावदस्य स्या,—न्न भूयो,
यदाहा,—ऽऽभूयो भरे,—त्य्, अपरिमितस्यावरुद्ध्यै, देवः सविता वसोर्वसुदाव,—ति सवितृ-
प्रसूत एवै,—ताभिर्देवताभिरेना प्रतिगृह्णात्यात्मनोऽहिꣳसायै, वायुर्गोपास्त्वष्टाधिपतिः, पूषा
प्रतिग्रहीते,—ति वायुमेवासां गोप्तारमक,—स्त्वष्टारमधिपतिं, पूषणं प्रतिग्रहीतार,—मापो वै
यज्ञो, यदपो दीक्षितोऽवगाहेत यज्ञमवक्रमीयाद्, यदाह, देवीरापो अपां नपा,—दिति यद्व-
चासाꣳ यज्ञियं मेध्यं तन्नाक्रामति, यदपो दीक्षितोऽवगाहेत विहृदिनीः स्यु,—स्तस्मान्नाव-
गाहेत, यद्यवगाहेत लोष्टꣳ शिम्बूर्णꣳस्तरेत्, तमेव सेतुमनुसंतरति, न वै दीक्षितं तरन्तं देवता
अनुतरन्त्य,—रणिभ्याꣳ सह तरति, सहैव देवताभिस्तरति, न वै दीक्षितं तरन्तꣳ यज्ञोऽनु-
तरति, रथाङ्गेन सह तरति, सहैव यज्ञेन तरति ॥ ९ ॥ १९–२०

अमुꣳ वा आदित्यꣳ सर्वा वाचो गच्छन्ति, ता उद्यति सर्वाः सृज्यन्ते, यदाह, याः पशू-
नामृषभे वाचा इति, सृज्यमानाꣳ वा एतद्वाचं पुनरालभते, वायवे त्वे,—ति नष्टामनुदिशति,
वरुणाय त्वे,—त्यप्सु मृताꣳ, रुद्राय त्वे,—ति महादेवाहतां, निर्ऋत्यै त्वे,—ति पाशसक्ता,—
मिन्द्राय त्वे,—ति श्लेष्मकहताꣳ या वा सꣳशीर्येत, मरुद्भ्यस्त्वे,—ति ह्रादुनिहता,—मेते वै
देवा भूत्या स्कन्नभागा,—स्तानेव प्रीणाति, देवेभ्यो वा अन्या दक्षिणा दीयन्ते, मनुष्येभ्योऽ-
न्या, एता वै देवेभ्यः प्रत्यक्षं दक्षिणा दीयन्त, एताभिर्वै भूयोऽवरुन्द्धे, यद्व चैतराभि,—
देवाश्च वा असुराश्चास्पर्धन्त,—तावान्वै तर्हि यज्ञ आसी,—दग्निहोत्रं दर्शपौर्णमासौ चातुर्मास्यानि,

---

[ त्वमग्ने व्रतपा असि० । ८,११,१; अथर्व १९,५९,१, तै. सं. १,१,१४,४,०,३,१ ]

[ १० ] मै. १,२,३ । काठ १३,७ । कपि. ३६,४ ।

ते देवा यज्ञमपश्यꣳ,—स्तेनादीक्षन्त, तेषाꣳ यदग्निहोत्रमासीत्तद्व्रतमुपायꣳ,—स्तस्माद्द्विव्रतेन भवित३व्यं, द्विर्ह्यग्निहोत्रꣳ हूयते, यदग्नीषोमीयं पूर्णमासे हविरासीत् तमग्नीषोमीयं पूर्वेद्युः पशुमालभन्त, यदैन्द्राग्नममावास्यायां तमाग्नेयꣳ श्वो भूते पशुमालभन्त, वैश्वदेवं प्रातःसवनमकुर्वत, वरुणप्रघासान्माध्यंदिनꣳ सवनꣳ, साकमेधान् पितृयज्ञं, त्र्यम्बकास्तत्तृतीयसवने, तस्मात् तृतीयसवने विश्वꣳ रूपꣳ शस्यते, विश्व३ꣳ ह्येतद्रूपं, तमेषाꣳ यज्ञमसुरा नान्ववायꣳ,—स्तेन वा एनानपानुदन्त, ततो देवा अभवन्, परासुरा,—स्तद्य एवꣳ वेद भवत्यात्मना, परास्य भ्रातृव्यो भवति, ते, ऽध्वृतोऽयमभूदित्य,—पाक्रामꣳ,—स्तदध्वरस्याध्वरत्वं, तस्मादेकव्रतेन भवितव्यꣳ, सकृद्ध्यग्निहोत्रꣳ हूयते ॥ १० ॥ २१

[ १५६३ ]

॥ इत्युपरिकाण्डे आग्नावैष्णवं नाम षष्ठः प्रपाठकः ॥ ६ ॥

अथ सप्तमः प्रपाठकः ।

अकल्पꣳ वा इदमासीद्, दिशो वा इमा नप्रजानꣳ,—स्तद्देवा अ३न्योऽन्यस्मिन्नैच्छꣳ,—स्तेऽदिताविन्दꣳ,—स्ते देवा अदितिमब्रुवꣳ,—स्त्वया मुखेनेमा दिशः प्रजानामेति, साब्रवीद्, भागो मेऽस्त्विति, वृणीष्वेत्य,—ब्रुव,—न्त्सोऽब्रवी,—न्मद्देवत्यमेव प्रायणीयमसं,—न्मद्देवत्यमुदयनीयं, मामेवानुप्रयाथ, मामनूद्याथेति, स एष आदित्यश्चरु,—रदितिꣳ वा एतदनुप्रयन्त्य,—दितिमनूद्यन्ति, ततो वा इमा दिशः प्राजानन् पथ्याꣳ यजती,—मामेव तेन दिशः प्राजानन्, यदग्निमिमां तेन, यत्सोममिमां तेन, यत्सवितारमिमां तेन, यददिति,—मियꣳ वा अदिति,—रूर्ध्वा वा अस्या दि,—गूर्ध्वामेव तेन दिशं प्राजानꣳ,—स्ततो वा अकल्पता,—ऽकल्पस्य वै कॢप्त्यै प्रायणीय,—स्तद्य एवꣳ विद्वान् प्रायणीयेन चरति कल्पते, कल्पन्ते हास्मा ऋतव,—स्ततो वा इमा दिशोऽन्वपश्यन्, यत् पथ्याꣳ यजतीमामेव तेन दिशमन्वपश्यन्, यदग्नीषोमा, चक्षुषी वा अग्नीषोमा, अनु नाभ्याꣳ समपश्यन्, यत्सवितारꣳ, सवितृप्रसूता एवेमा दिशोऽन्वपश्यन्, यददिति,—मियꣳ वा अदिति,—रस्याꣳ वै प्रतिष्ठाय देवा यज्ञमतन्वत, यत् पथ्याꣳ यजति, वाग्वै पथ्या, वाचमेवावरुन्द्धे, यदग्निं देवतास्तेन, यत् सोमꣳ यज्ञं तेन, यत् सवितारं प्रसूत्यै, यददिति,—मादित्या वा इमाः प्रजा,—स्ता

---

[ १ ] तै. ६,१,५ । क. २३,८—९ । कपि. ३६,५—६ ।

एतावरुद्ध, तो आग्या अकृत, यद्वै यज्ञस्यान्तर्यन्ति तच्छिद्रं, तेन यज्ञः स्रवति, तेन
यजमानोऽग्नये समवद्यत्य,—ग्निर्वै संमिष्टि,—रग्निः प्रतिष्ठितिः, संमिष्ट्या एवं प्रतिष्ठित्या अग्निं
प्रथमं यजत्यग्निमुत्तमं, समानी वा एषा देवता पाङ्क्तत्वाय, पाङ्क्तो यज्ञो, यावानेव
यज्ञस्तमालभ्य, स्वस्तिं यजति यज्ञस्य स्वस्त्यै, पथ्यां यजति, वाग्वै पथ्या, वाच-
मेवानुप्रयन्ति, तामुत्तमामुदयनीये यजति, वाग्वै पथ्या, वाचमेवानूद्यन्ति, मरुत्वतीः
पथ्याया ऋचो भवन्ति, देवविशो वै मरुतो, देवविशमेवाचीक्लृपत्, तां शान्तां क्लृप्तां
मनुष्यविशो अनुकल्पन्ते, स्तेनभाविष्णुर्हविर्भवति ॥ १ ॥ १

जुपाणेनान्य आज्यभागा इज्यन्ते, ऽथात्र ऋचोभयतो यजति द्रढिम्नेऽशिथिरत्वाय,
सप्तदश सामिधेनीः कार्याः, पञ्च ऋतवो, द्वादश मासा, एष संवत्सरः, संवत्सरा-
देवाधि यज्ञमुखं प्रतनुते, तदाहुः, पञ्चदश सामिधेनीः कार्या, न सप्तदश, संवत्सरी-
यस्यैवायनस्य, सप्तदश कार्याः संवत्सरस्या ऋद्ध्या इति, तच्च संस्थं, सप्तदशैव कार्याः,
प्रयाजवत् स्यात् प्रायणीयमननुयाजं,—मनुयाजवत् स्यादुदयनीयमप्रयाजं,—मुभयतो वा एतत्
प्रयाजानुयाजा यज्ञमभिसंधीयते, समानो ह्येष यज्ञो, निष्क्राम च मेक्षणं च निदधाति,
तेन यज्ञः मैतत, आत्मा वै प्रयाजाः, प्रयाजानुयाजा देवक्षेत्रं, यज्ञो देवक्षेत्रमाक्रममाणः
प्रजामन्तरियाद्, यदनुयाजानन्तरियात् प्रयाजवत् स्याद् प्रायणीयमनुयाजं,—दनुयाजवत्
स्यादुदयनीयं प्रयाजवत्, पयसि प्रायणीयः स्यात्, पयस्युदयनीयो, ऽपां वा एतच्
शुक्रियं,—मपामेव शुक्रियमवरुन्द्धे, पशवो वै शुक्रियं, पशूनेवावरुन्द्धे, ऽथो प्रायणे च
वावास्मा एतदुदयने च पशून् दधात्या,—दित्यः प्रायणीयः स्या,—दादित्य उदयनीय, इयं
वा अदिति,—रस्यां वा एतद्यजमुखेन प्रतितिष्ठत्य,—स्यामुपरिष्टाद्, यत्र वै यज्ञस्यार्धऽग्रे संमृद्ध
क्रियते क्रियमाणं क्रियमाणं ह वा अस्य संमृच्यते, संस्थाप्यं प्रायणीयं यज्ञस्य संमृद्ध्यै,
याः प्रायणीयेऽनुवाक्यास्ता उदयनीये याज्याः स्यु,—र्या उदयनीयेऽनुवाक्यास्ताः प्रायणीये
याज्याः स्युः, पथः प्रतिप्रज्ञात्या, अथो अनुसंतत्यै, यदतोऽन्यथा कुर्युश्छम्बट्कुर्युः ॥२॥
२

इयं वै कद्रू,—र्वाक् सुपर्णी, छन्दांसि सौपर्णानि गायत्री त्रिष्टुब्जगती, सा वै कद्रूः
सुपर्णीमात्मानमयजत, साब्रवीत्, सोममाहर, तेनात्मानं निष्क्रीणीष्वेति, सा छन्दांसि

[१] तै ६,१,५। कठ २३,९। कपि ३६,६।
[२] तै ६,१,६। काठ २३,१०। कपि ३७,१।

ग्रेप्सु,—दमुतः सोममाहरत, तेनु मा निष्क्रीणीतेति, ततो जगत्युदपतत्, सा पशुभि-
श्चागच्छद्दीक्षया च, तस्मात् पशवा इति जगतीमाहु,—स्तस्माद्यदा पशून् विन्दतेऽथ दीक्षते,
ततस्त्रिष्टुबुदपतत्, सा दक्षिणया चागच्छत् तपसा च, तस्मात् त्रिष्टुभो लोके दक्षिणा दीयन्ते,
तस्मादु मध्यंदिने तपस्तपनीयमिति, ततो गायत्र्युदपतत्, सा सोममाहरत्, तमाह्रियमाणꣳ
सामिं गन्धर्वो विश्वावसुरमुष्णात्, स तिस्रो रात्रीरुपहतोऽवसत्, तस्मात्तिस्रो रात्रीः क्रीतो वसति,
तेऽब्रुवन्, पुनर्याचामहा इति, ते देवा अब्रुव,—न्स्त्रीकामा वै गन्धर्वा, वाचमेव संभृत्य
यथा योषिद्गनपक्षेपतमेव तया निष्क्रीणामेति, तꣳ वै निरक्रीणꣳ,—स्तस्मादाहु,—र्वाग्वै
सोमक्रयणी, वाचꣳ वा एतद्देवा निष्क्रीणन्तीति, तेऽब्रुव,—न्नृतीयामहा इति, तामे-
न्नातीयन्त, तदनृतस्य जन्म, तद्य एवꣳ विद्वान्त्सत्यानृतां वाचꣳ वदति न हैनं दुणाति,
तेऽब्रुवन्, निह्वयामहा इति, ताꣳ व्यह्वयन्त, गाथां देवा अगायन्, ब्रह्म गन्धर्वा अवद,-
—न्त्सा देवाननुपावर्तत, तस्माद्विवाहे गाथा गीयते, तस्माद्गायन्त्स्त्रियाः प्रिय,—स्तद्य एवꣳ
विद्वान् गाथां गायन् हस्तं गृह्णाति, सꣳ हि जीवतः, सर्वमायुरेतो, नार्तिं नीत,—स्त-
दाहु,—र्वा वै सा पुनरगच्छ,—न्नैव किं चन सोमक्रयणीति ॥ ३ ॥ ३

या द्विरूपा सा वार्त्रघ्नी, यत्तया क्रीणीयाज्ज्यायुकमस्य राष्ट्रꣳ स्या,—दथ यस्य तादृश्यनुस्तरणी
भवति ताजगेपामपुरः प्रमीयते, या रोहिणी कृष्णाक्षी कृष्णवाला कृष्णशफा सा पितृदेवꣳ-
त्या, यत्तया क्रीणीयात् प्रमायुको यजमानः स्या,—दथ यस्य तादृश्यनुस्तरणी भवत्यृतुमद्देपा-
मेपुरः प्रमीयते, याऽरुणा बभ्रुलोम्नी श्वेतोपकाशा शुल्पदृक्षी तत्सोमक्रयण्या रूपꣳ, स्वेनैव रूपेण
क्रीयते, काणा स्याद्स्रवी श्रोणा सप्तशफा, तथा सर्वया क्रीयता, एकहायन्याक्रय्या,
वाग्वै सोमक्रयणी, तस्मात् प्रजाः संवत्सरे वाचꣳ वदन्त्य,—प्सु क्रय्या, 'ओषधयो वै
सोमा, आपा ओषधीनाꣳ रस,—स्तथा स रसः क्रियते, क्रये वा अहꣳ सोमस्य तृतीयꣳ
सवनमवरुन्द्धे, येदं,—ति ह स्माहारुण औपवेशिः, पशवो वै तृतीयꣳ सवनं, पशूनां चर्म,
यच्चर्मणि निवपति तेनैव तृतीयꣳ सवनमवरुन्द्धे, रोहिते निवपति, तस्मात् पशूनाꣳ रोहित-
रूप,—मानडुहे निवपत्य,—नड्वान्वै सर्वाणि वयाꣳसि पशूनाꣳ, सर्वाण्येवं वयाꣳसि पशूनामा-
प्त्वावरुन्द्धे, ऽथो यद्देव यज्ञस्यावरुन्द्धे, मोमꣳ विचिन्वन्ति पापवसीयस्य व्यावृत्त्या, अथो

[४] मै १,७,५ । तै ६,१,६,७ । कठ २४,१—२ । कपि ३७,२–३ । आ ४,२५ । आप ४,३४ ।

देवेभ्य एवैनꣳ शुन्धन्ति, नाध्वर्युः सोमꣳ विचिनुया,-न्न यजमानो, न यजमानस्य पुरुषा नोपद्रष्टारो विचीयमानस्य स्युं,-यदुपद्रष्टारो विचीयमानस्य स्युः क्षुधं प्रजा नीयु,-रवर्तिर्यजमानं गृह्णीयाद्, क्षोधुकोऽध्वर्युः स्यात् ॥ शुन्ध सोममापव निरस्य ॥ इति ब्रूयाद्, ग्रसितꣳ वा एतत् सोमस्य यदापवं, ग्रसितमेते सोमस्य निष्खिदन्ति ये सोमꣳ विचिन्वन्ति, तस्मात् सोमविक्रयिणो बहु क्रीणन्तो बहु विन्दमानाः क्षोधुका, ग्रसितꣳ ह्येते सोमस्य निष्खिदन्त्या,-स्मा३कोऽसीत्य,-भिस्सार एवास्यै,-प शुक्रस्ते ग्रहा, इति शुक्रमेवास्य गृह्णात्य,-भि त्यं देवꣳ सवितार,-मिति सवितृप्रसूत एव गृह्णात्य,-तिछन्दसा गृह्णाति, सर्वाणि वै छन्दाꣳस्यतिछन्दाः, सर्वैरेवैनं छन्दोभिर्गृह्णाति, वर्ष्म वा एषा छन्दसाꣳ, वर्ष्मैनꣳ समानानां गमयति, पश्वभिर्गृह्णाति, पाङ्क्तो यज्ञो, यावानेव यज्ञस्तमालभ्ये,-कैकामुत्सर्जं मिमीते, ऽयातयाम्न्यायातयाम्न्यैव मिमीत, एतावती वा आसामेकैकस्या वीर्यमाप्यते, तस्मादिमाः कामं प्रसारयति, कामं प्रत्यञ्चति, दश कृत्वो मिमीते, दशाक्षरा विराड्, विराजमेवाप्नोत्य,-थो वैराजाः पशवः, पशूनेवावरुन्द्धे, द्विर्गृह्णाति, द्वे हि सवने, यावान्वै सोमो गृहीतः स यजमानस्य, यमभ्युद्धति स सदस्यानां, प्रजाभ्यस्त्वेत्य,-भ्युहति, गोत्राद्गोत्राद्धि प्रसर्पन्त्यो,-पधयो वै सोमो, ऽपरिमितं जीवनꣳ, यत्परिमितं गृह्णीयात् परिमितं जीवनꣳ स्या,-दथ यदभ्युहत्यपरिमितस्यावरुद्ध्यै, यजमानो वै प्रजापतिः, प्रजा अꣳशवो, यत्सोममुपनह्यति प्रजानाꣳ वा एतत् प्राणमुपनह्यति, यदाह, प्रजास्त्वानुप्राणन्त्विति, प्राणमासु दाधार, क्षौममुपनह्यत्यो,-पधꣳ वै क्षौम,-मोषधयः सोमस्य योनिः, स्व एवैनꣳ योनौ दधाति, यज्ञो यदग्रे देवानामगच्छत्तꣳ रक्षाꣳस्यजिघाꣳस,-न्त्स देवता व्यपासर्पद्, सर्वदेवत्यꣳ वै वासो, यत्क्षौममुपनह्यति सर्वाभिर्वा एतद्देवताभिर्यज्ञाद्रक्षाꣳस्यपहन्त्य,-थो सर्वाभिरेव देवताभिर्यज्ञꣳ समर्धयति ॥ ४ ॥ ४-६

चतुर्गृहीतमाज्यं भवति, चतुष्पादो वै पशवः, पशूनेवावरुन्द्धे, हिरण्यमवधाय जुहोत्या,-ग्नेयं घृत,-माग्नेयꣳ हिरण्यꣳ, सतनूरेव सतेजा हूयत, एषा वा अग्नेः प्रिया तनूर्यद् घृतं, तेजो हिरण्यꣳ, यद्धिरण्यमवधाय जुहोत्यग्नेर्वा एतत् प्रियां तनुवं तेजसा समर्धयत्य,-थो रूपाण्येव ग्राहयति, पशवो वै घृतꣳ, रेतो हिरण्यꣳ, यद्धिरण्यमवधाय जुहोति पशुषु वा

[ अभि त्यं देव०। अथर्व ७,१४,१, श्रौ प्र अ ४, स ६, ]
[ ५ ] मै १,२,४। तै ६,१,७। काठ २४,३। कपि ३७४। वा ४,१७-१९। काण्व ४,६१-२५।

एतद्रेतो दधाति, तस्मादनस्थकाद्रेतसोऽस्थन्वन्तः पशवः प्रजायन्ते, बद्धेन जुहोति, तस्मात् पशूनां गर्भा अप्रपादुकाः, प्रपादुकाः पशूनां गर्भाः स्युर्यदबद्धेन जुहुया,—ज्जूरसीति, यद्वाव जवत, इत्थमसा३दित्थमसा३दिति, तदस्या जूत्वं, धृता मनसेति, मनसा हि वाचं दाधार, जुष्टा विष्णवा इति, यज्ञायैवैनां जुष्टां विष्णवेऽक,—स्तस्यास्ते सत्यसवसः प्रसव इति, वाचा हि प्रसूतं क्रियते, तन्वो यन्त्रमशीय स्वाहेत्या,—ऽऽशिषमेवाशास्ते, शुक्रमसि, चन्द्रमसीत्यु,—द्वराति स्वर्गस्य लोकस्य समष्ट्यै, वाग्वै सोमक्रयणी, वास्ति वाचैनामेतत्, तस्मात् प्रजाः सृष्टा प्रजायन्ते, वत्सो जातः स्तनमिच्छति, स्तनं कुमार इच्छति, चिदसीति, यद्वाव चिकित्सत, इत्थमसा३दित्थमसा३दिति, तदस्याश्चित्त्वं, मनासीति, यद्धि मनसा मन्युते यन्मनसाभिगच्छति तद्वाचा वदति, धीरसीति, यद्वावध्यायती,—त्थमसा३दित्थमसा३दिति, तदस्या धीत्वं, दक्षिणासीति, यत्स्विद्वाचा दीयते तदस्या दक्षिणात्वं, यज्ञियासीति, वाग्घि यज्ञिया, क्षत्रियासीति, यं हि वाग्जुषते स क्षत्रियो, ऽदितिरस्युभयतःशीर्ष्णीति, यत्स्विदादित्यः प्रायणीय आदित्य उदयनीयस्तदस्या उभयतःशीर्षत्वं, सा नः सुप्राची सुप्रतीची भवेति, सुप्राची ३ह्येषा प्रायणीये सुप्रतीच्युदयनीये॥५॥

६

यत्कर्णगृहीतया क्रीणीयाद्वार्त्रघ्नी स्याद्, यच्च शृङ्गाभिहितया मनुष्यदेवत्या, यत् पदि बद्धया पितृदेवत्या, यदबद्धयायता स्याद्, यदाह, मित्रस्त्वा पदि बध्नात्विति, मित्रस्यैवैनां पाशेन यच्छति, पूषाध्वनः पात्विती,—यं वै पूषे,—यमेवास्या अध्वानं संभरती,—न्द्रायाध्यक्षायेती,—न्द्रो वै देवानामोजिष्ठ,—स्तमेवास्या अध्यक्षमक,—रनु त्वा माता मन्यतामनु पितेत्य,—नुमत एवैनां मात्रा पित्रा भ्रात्रा सख्या क्रीणाति, सा देवि देवमच्छेहीति, देवी ३ह्येषा, देवः सोमा, इन्द्राय सोममिती,—न्द्राय ३ह्येषा सोममच्छेति, रुद्रस्त्वावर्तयत्विति, रुद्रमेवास्याः पुरस्ताद्दधाति, स्वस्ति सोमसखा पुनरेहीति, प्रत्यक्षमेवालब्ध, रुद्राय वा एतत् पशूनपिदधाति, यदाह, रुद्रस्त्वावर्तयत्, यदाह, स्वस्ति सोमसखा पुनरेहीति, स्वस्तिमेवास्य पुनरावृत्तायै दधाति, वाग्वै सोमक्रयणी, सा देवरूपाणि प्रविशति, यदाह, वस्व्यसि, रुद्रासीती,—दमसीदमसीति, वाग्वैनामेतदाह यद्यद्भवति, यद्वा एतत् किंच वदत्येतां वा एवंदाप्त्वावरुन्द्धे, षट् पदान्यनु निष्क्रामति, षड्वा अहानि वाग्विभज्यते, न वै

[ ६ ] मै. ३,७,४ । तै ६,१,७—८ । काठ २४,३—४ । कपि ३७,४—५ । श. ३,२,४—२२ । आप. १०,२२—२९ ।

पृष्ठमहर्यागातिवदति, सर्वा वै पृष्ठेऽहन्वागाप्यते, यावत्येव वाक्तामाप्नोति, दक्षिणेनार्धेन दक्षिणमर्धमनु निष्क्रामति, तस्माद्दक्षिणेन हस्तेनान्नमद्यते, तस्माद्दक्षिणोऽर्ध आत्मनो वीर्यवत्तर,—स्तस्माद्दक्षिणमर्धꣳ वयाꣳस्यनु पर्यावर्तन्ते, सप्तमे पदे जुहोति, सप्त छन्दाꣳसि, छन्दाꣳसि वाग्, यावत्येव वाक्तामाहुत्याप्त्वावरुन्द्धे, सप्त छन्दाꣳसि, सप्त होत्राः, सप्त ग्राम्याः पशवः, पशूꣳस्तानेवावरुन्द्धे, बृहस्पतिष्ट्वा सुम्ने रम्णात्विति, ब्रह्म वै बृहस्पति,—र्ब्रह्मणैवैनाꣳ यच्छति, रुद्रो वसुभिराचिकेत्विति, रुद्रमेवास्या वसुभिराकर्तारमकः, पृथिव्यास्त्वा मूर्धन्नाजिघर्मीति,—एष वै पृथिव्या मूर्धा यद्देवयजन,—मिडायास्पद इति, गौर्वा इडा, तस्या वा एतत्पदं, घृतवतीति स्वाहेति, स्वाहाकारेणैवैनाꣳ यच्छति ॥ ६ ॥ ८

हिरण्यं निधाय जुहोत्य,—ग्निमत्येव जुहोत्यायतनवत्य,—थोऽध्वर्युः स्याद्यदनायतने जुहुयात्, पशवो वै घृतं, पशवः पदꣳ, वज्रꣳ स्फ्यो, यत्स्फ्येन पदं परिलिखति वज्रेण वा एतद्यजमानाय पशून्परिगृह्णाति, त्रिपाणयानुपरिलिखति, संयोनीनेवास्मै पशून्परिगृह्णाति, स्थाल्यां पदꣳ संवपत्य,—स्यां वा एषाधिक्रियत, इयꣳ हि पशूनाꣳ योनिः, स्व एवैनान् योनौ दधाति, शोचन्ति वा एतत्पशवो योनेश्छिन्ना, यदुप उपसृजति शमयत्येवै, यजमानाय पदं प्रयच्छति, तदध्वर्युः पशुभिर्भरति, यजमानाय हि पशूꣳस्सम्प्रादाद्, यदाह, तव राया इति, तदध्वर्युं पशुष्वाभजति, तेनाध्वर्युः पशुमान् गृहेषु पदं निदधाति, गृहेष्वेवास्य पशून् दधाति, स्वर्गो वै लोक आहवनीयो, यदाहवनीय उपवपेदन्यलोकेऽस्य पशून् दध्याद्, गार्हपत्या उपवपति, गार्हपत्यꣳ हि पशवोऽनूपतिष्ठन्ते, पशुभिरेवैनꣳ सम्यञ्चं दधाति, पशवो वै पदं,—मर्या रुद्रो, यदभिमत्युपवपेद्रुद्रायास्य पशून् दध्याद्, यत्र शान्तं तदुपोष्यं पशूनामप्रदाहाय, यत्सोमक्रयण्या पत्नीꣳ संख्यापयन्ति मिथुनत्वाय, त्वष्ट्रिमन्तस्त्वेति, त्वष्टा हि रूपाणि विकरोति, सपेमेति, सपाद्धि प्रजाः प्रजायन्ते, सूर्यस्य चक्षुरारुहमित्य,—एष वा अपरिपरः पन्था अरक्षस्यो येनासा आदित्य एत्य,—मुष्य वा एतदादित्यस्य पथ इति, वृणक्ति विन्दते वस्विति, वसोह्येष विन्दते यः सोमं क्रीणाति॥ सोमविक्रयिन्त्सोमं ते क्रीणानि महान्तं बहहे बहुं शोभमानं, कलया ते क्रीणानि, कुष्टया ते क्रीणानि, शफेन ते क्रीणानि, पदा ते क्रीणानि ॥ इति, गौर्वा एतन्महिमानमुदाचष्टे, ऽथो महयत्येवैना,—मथो अक्षरशो वा एतद्यज्ञं मिमीते, सुवाईनश्राईङ्कारे बम्भारा ईत्य,—ते वै देवानाꣳ सोमरक्षय,

[ ७ ] मै १,२,४—५। तै ६,१,८-१०। काठ. २४,५-६। कपि ३७,५,७। वा ४,१७,१९,३२। काण्व ४,३९,४१,४४।

एतेभ्यो वा अधि छन्दाꣳसि सोममाहरꣳ,—स्तेभ्य एवैनाननुदिशत्य,—थो यदेवान्न यज्ञस्योपश्लिष्टं तत् परिक्रीणीते, दशभिः क्रीणाति, दशाक्षरा विराट्, तथा वैराजः क्रियत, एकादशभिः क्रीणाति, दश वै पशोः प्राणा, आत्मैकादश,—स्तथा सर्वः क्रियते, धेन्वा क्रीणात्या,—शिरमेवास्य क्रीणात्य,—थो वाचमेव गृह्णाति, हिरण्येन क्रीणाति, शुक्रमेवास्य क्रीणात्य,—थो तेज एव गृह्णाति, वाससा क्रीणाति, सर्वदेवत्यमेवास्य क्रीणात्य,—जया क्रीणाति, तप एवास्य क्रीणाति, यत्र वा अदश्छन्दाꣳसि सोममाहरꣳस्तानि तमसा न प्राजानꣳ,—स्ततो गाय३्यजोमादायोदपतत्, सा वा एभ्यः प्रारोचयत्, तनो वै छन्दाꣳसि सोममाहरꣳ,—स्तत् सोमं ना आजा,—मिति वाचाजानडुहा क्रीणाति, वह्नयेवास्य क्रीणात्यृ,—षभेण क्रीणाति, सेन्द्रमेव क्रीणाति, यदृषभेण क्रीणीयात् प्रजापतिना विक्रीणीते, वत्सतरेण साण्डेन क्रय्यस्यैन्द्रमहः क्रीणाति, न प्रजापतिना विक्रीणीते, मिथुनाभ्यां गोभ्यां क्रीणाति, मिथुनमेवास्य
क्रीणाति ॥ ७ ॥ ९–११

सोमो वा अमुत्रासीत्, तं देवा गायत्रीं प्राहिण्व,—न्नमुꣳ सोममाहरेति, सा विततꣳ यज्ञमेवापश्यत्, संस्तुत, यद्यज्ञस्यान्तरेण्यास्यात्मानमन्तरेष्यामीति, तस्यै वा एतꣳ सोमो जीवग्रहं प्राब्रवीत्, स्वजा असि, स्वभूरसीति, सोमस्य वा एष जीवग्रहः, सोमस्य वा एतज्जीवग्रहं गृह्णीते, नाध्वर्युः सर्वार्तिमार्छति य एवꣳ वेद, वरुणो वा एष एतर्हि वरुणदेव३त्यो यदुपनद्धो वरुण एनं भूत्वा प्रविवेद, यदाह, मित्रो ना एहि सुमित्रधा इति, मित्रमेवैनमकः, शमयत्येवै,—न्द्रस्योरुमाविश दक्षिणमित्यै,—न्द्रो वै यज्ञ, इन्द्रः सोमस्य योनिः, स्व एवैनꣳ योनौ दधाती,—न्द्रो वा एतमग्र आगतमूरू न्यगृह्णीत, ताꣳ वा एतदनुकृतिमूरा आसादयतेऽपोर्णुते, यथा श्रेयस्यायत्यपोर्णुत एवं त,—दु३र्वन्तरिक्षꣳ ३वीहीत्य,—न्तरिक्षदेव३त्यो वा एष एतर्हि, प्रच्युत इतोऽप्राप्तोऽमुत्रादित्याः सदा आसीदन्त्या,—दित्यो वै यज्ञो, ऽदितिः सोमस्य योनिः, स्व एवैनꣳ योनौ दधाति, वरुणꣳ वा एनमेतत्सन्तं मित्रमक,—स्तदेनꣳ
स्वया देवतया न्यर्धयति यदाह ॥ १२

अस्तभ्नाद् द्यामृषभो अन्तरिक्षममिमीत वरिमाणं पृथिव्याः ।
आसीदद् विश्वा भुवनानि सम्राड् विश्वेत्तानि वरुणस्य व्रतानि ॥ १३

[८] मै. १,२,६ । काठ. २४,७—८ । कपि. ३७,७—८ । वा. ४,२७,३०-३१,३३-३४,३६ । काण्व. ४,३८,४२-४३, ४५-४६,४८ । [ अस्तभ्नाद् द्यामृषभो० । ऋ ८,४२,१;३,३०,९, ( प्र. पा. ); तै. सं. १,२,८,१ ]

इति वरुणमेवैनमकः, स्वयैवैनं देवतया समर्धयति, वनेषु ३व्यन्तरिक्षं ततानेति
वाससा पर्याणह्यति, सर्वदेव३त्यं९ वै वासः, सर्वाभिर्वा एतद्देवताभिर्यज्ञं क्रीतं परिश्रयति,
धूरसि, धूर्व धूर्वन्तमित्याह रक्षसां धूर्वायै रक्षसामन्तरित्यै, वारुणमसि, वरुणस्त्वोत्त-
भ्नात्विति, वारुणं९ ३ह्येष एतर्हि वरुणदेव३त्यं, मनसाच्छ यन्ति, महिमानमेवास्याच्छ
यन्त्यं, नसा वहन्ति, तस्मादनोवा३ह्यमोषधयः फलं पच्यन्ते, शीर्षाहार्यमोषधयः फलं
पच्येरन्यत्सोमं क्रीतं९ शीर्ष्णा हरेयु, स्तस्मादिरा ओषधयः शीर्षाहार्यं फलं पचयन्ते, शीर्ष्णा हि
सोमं क्रीतं९ हरन्ति, प्रच्यवस्व भुवनस्पत इति, भूतानां९ ३ह्येष पति, विश्वान्यभि
धामानीति, विश्वानि ३ह्येष धामान्यभि प्रच्यवते, मा त्वा परिपरिणो मा परि-
पन्थिनो मा त्वा वृका अघायवो विदन्निति, यत्र वा एनमदं आह्रियमाणं९ सामिगन्धर्वो विश्वा-
वसुरमुष्णात्ताद्दशीभ्यो वा वासा एतद्रक्षोभ्यो भीषा स्वस्तिमक, वरुणो वा एष क्रीतो यजमानस्य
गृहमौहते, स ईश्वरोऽशान्तो यजमानं९ हिं९सितो, यदाह, नमो मित्रस्य वरुणस्य चक्षुस
इति, शमयत्येवं, शान्त एवौहते यजमानस्याहिं९सायै, सर्वाभ्यो वा एष देवताभ्य
उह्यते, यदेकोल्मुकेन प्रतितिष्ठेत् पितृदेवत्योऽस्य यज्ञः स्या, दग्निमीहत्सुमाधेयो, ऽग्निर्वै
सर्वा देवताः, सर्वाभिर्वा एतद्देवताभिर्यज्ञमायन्तं प्रतितिष्ठत्य, ग्नीषोमौ वा एतौ संभवतो,
यजमानं९ वा एतौ अभिसंभवेतां९ यजमानस्य वा पशू९, स्तौ एष पशुधार्यते तमेवं भागधेय-
मभिसंभवतो, देवता वा एतं पशुं धार्यमाणं नाभिप्राच्यवन्ता, ऽस्मिन् यज्ञ आशं९समाना३ह्यो-
ऽयमितुरस्तमग्नीषोमा उपप्राच्यवेतां, तस्मादेषोऽग्नीषोमीयो, ऽग्नीषोमाभ्यां९ वा एष मेधाया-
त्मानमालभते, यो दीक्षते स वा एतेनैव पशुनात्मानं निष्क्रीणीते, स्थूलः पीवा स्यादात्मनो
निष्क्रीत्यै, तस्मादग्नीषोमीयस्य पशोर्नाशित३व्यं, पुरुषो ३ह्येतेनात्मानं निष्क्रीणीते, तस्मा-
दग्नीषोमीये सं९स्थिते यजमानस्य गृहेऽशित३व्यं, तर्हि निष्क्रीतोऽनृणो, वार्त्रघ्नं९ वा एतद्,
सोमो वै वृत्रः, पूर्वेद्युर्वा इन्द्रो वृत्रमहन्, पूर्वेद्युर्वावैनमेतत्सुत्वाथापरेद्युरभिषुणोति, वरुण-
पाशाभ्यां९ वा ए३षोऽभिधीयते यो दीक्षते, ऽहोरात्रे वरुणपाशौ, यद्दिवा सं९स्थापयेदनुन्मुक्तो
वरुणपाशाभ्यां९ स्या, न्नक्तं९ सं९स्थाप्यो, वरुणपाशाभ्यामेवोन्मुच्यत आत्मनोऽहिं९-
सायै ॥ ८ ॥ १४

[ वनेषु व्यन्तरिक्षं० । ऋ ५,८५,२, तै सं १,२,८,१ ]

युक्तोऽन्योऽनड्वान् भवति, विमुक्तोऽन्यो, ऽथातिथ्यं निर्वपति यज्ञस्य संतत्यै,
पत्न्या हस्तान्निर्वपति, पत्नी वै पारिणह्यस्येशे, पत्न्यैव रातमनुमतं क्रियते, यद्वै पत्नी
यज्ञे करोति तन्मिथुनं, मिथुनत्वाय वै पत्न्या हस्तान्निर्वपत्ये,—यं वै पत्न्या यज्ञस्यान्वारम्भो
यंयज्ञे करोत्य,—न्वारम्भाय वै पत्न्या हस्तान्निर्वपत्य,—ग्नेस्तनूरसि, विष्णवे त्वेति, गायत्री
तेन छन्दसा गृह्णाति, सोमस्य तनूरसि, विष्णवे त्वेति, त्रिष्टुभं तेना,—ऽतिथेरातिथ्यमसि,
विष्णवे त्वेति, जगतीं तेना,—ऽग्नये त्वा रायस्पोषदे, विष्णवे त्वेत्य,—नुष्टुभं तेन, श्येनाय
त्वा सोमभृते, विष्णवे त्वेति, गायत्री वै श्येनः सोमभृत्, तां वा एतत् पुनरालभतेऽयात-
याम्नीं पाङ्क्तत्वाय, पाङ्क्तो यज्ञो, यावानेव यज्ञस्तमालब्ध,—तद्वै छन्दांस्यग्रहीत्,
तैश्छन्दोभिर्गृहीतैर्यज्ञं गृह्णाति, यावन्तो वा अतिथिमन्वायन्त्यपि तेषां भाग,—श्छन्दांसि वा
एतममुतोऽन्वायन्ति, तेभ्य एष भागः क्रियते, वरुणो वै यज्ञः क्रीतो, विष्णुः प्रतत,
प्रततो वा एतर्हि यज्ञ,—स्तस्माद्वैष्णवो नवकपालो भवति, त्रिवृतं वा एतद्यज्ञमुखे व्यायातयन्ति
त्रिवृता प्रयन्ति, ते वै त्रयस्त्रिकपाला,—स्त्रिकपालो वैष्णवो देवतया, विष्णुं वै देवा आनय-
न्नामनं कृत्वा, यावदयं त्रिर्विक्रमते तदस्माकमिति, स वा इदमेवाग्रे व्यक्रमता,—ऽथेदमथाद,-
—स्तस्मात् त्रिकपालो वैष्णवः, सोमस्य वा एतदातिथ्यं गृहातिथ्य,—मथवा एतदुभेरातिथ्यं
यदग्निं अग्निं मन्थन्त्य,—थो यज्ञाय वा एतत् क्रीताय देवतां जनयन्त्य,—थो तेज एवास्मै जन-
यन्त्य,—थो उपसत्सु वानोस्मा एतद्वीरं जनयन्त्या,—ऽऽहास्य वीरो जायते, यं वै देवाः साध्या
यज्ञमत्यमन्यन्त तेषां वा एतद्यदतिरिक्तं यज्ञे क्रियते, ऽतिरिक्तं वा एतद्यज्ञे क्रियते यदग्नौ
अग्निं जुहुति, यत्कपालादुपयूपस्य तद्देवतां स्पृशति, संस्थाप्या३न्न संस्थाप्या३,—मिति
मीमांसन्ते, यत्संस्थापयेद्यज्ञमुखे यज्ञं संस्थापये,—दातिथ्यं वा उपसदां प्रयाजास्तान्-
नुपनेनाशी,—स्तस्मादिडान्तमेव कार्य,—मातिथ्यं वा उपसदां प्रयाजा,—स्तस्मात्ता अप्रयाजा,
उपसदो वा आतिथ्यस्यानुयाजा,—स्तस्मात्तास्त्रिस,—स्त्रयो ह्यनुयाजाः, शिरो वा आतिथ्यं,
ग्रीवा उपसदो, ऽथैष इतरो यज्ञः संहितः, प्रजापतेर्वा एतानि पक्ष्माणि यदश्ववाला,
अस्य श्रेष्ठा इक्षुकाण्डे, यज्ञमुखं प्रजापति,—र्यज्ञमुखादेवाधि यज्ञमुखं प्रतनुते, ऽश्वो वै मेध्यो,
यज्ञः प्रजापतिः, प्राजापत्योऽश्व,—स्तस्मादाश्ववालः प्रस्तरः, कार्ष्मर्यमयाः परिधयो भवन्ति
रक्षसामपहत्यै ॥ ९ ॥ १५

[ ९ ] मै २,७,३ । तै ६,२,१ । काठ २४,८ । कपि ३८,१ । श. ५,१ । कात्या. ५,१ ।

देवा अ३न्योन्यस्य श्रैष्ठ्ये तिष्ठमानाश्चतुर्धा व्युदक्राम,—न्नग्निर्वसुभिः, सोमो रुद्रै,—रिन्द्रो मरुद्भि,—र्वरुण आदित्यै,—स्तान्वा एतेन बृहस्पतिरयाजयत्, तेषामिन्द्रोऽभवत्, तेषु एतेन यजते भवति, ते वा [illegible] ःप्रियास्तन्व आस९स्ताः समवाद्य९,—स्ताः सम[illegible] द्रुह्यादिति एवं स निर्ऋच्छात्॥ इति, ते यदा समवामृश९स्ततो देवा अभवन् परासुरा,—स्तथ एव९ विद्वा९सः समवमृशन्ति भवन्त्यात्मना, परैषां भ्रातृव्या भवन्ति, यं कामयेत, ऋध्नुयादिति, तं प्रथममवमर्शयेद्, ऋध्नोति, यदि कामयेत, सर्वे सदृशाः स्युरिति, सर्वान्सहावमर्शयेत्, सर्वे ह सदृशा भवन्ति, ये वै ते समवामृशन्नपि वा इदानीं ३तेऽन्योन्यस्मै न द्रुह्यन्ति, तस्मात् संतानूनप्त्रिणे न द्रोग्धवै, यद् द्रुह्येत् प्रियायै तन्वै द्रुह्येत्, ते वा अमुष्मिन्नादित्ये प्रियास्तन्वः संन्यदधत, तस्मादेष तेजिष्ठं तपति, तस्मात् सर्वदेवत्या हि सर्वे सोमा गृह्यन्ते, ऽथो अत्र वै देवानां प्रियास्तन्व,—स्ता एवावरुन्द्ध, आपतये त्वा गृह्णामीत्य,—ग्नये तेन वसुभ्यो गृह्णाति, परिपतये त्वेति, सोमाय तेन रुद्रेभ्य,—स्तनूनप्त्र इती,—न्द्राय तेन मरुद्भ्यः, शक्मने शाक्वरायेति, वरुणाय तेनादित्येभ्य, एतेभ्यो वै तद्देवेभ्योऽग्रे गृह्यते, तेभ्य एवैनद्गृह्णाति, चतुर्गृह्णाति, चतुर्धा हि ते व्युदक्राम,—न्नापतये त्वा गृह्णामीत्या,—त्मानमेव तेन गृह्णाति, परिपतये त्वेति, प्रजां तेन, तनूनप्त्र इति, पशूं तेन, शक्मने शाक्वरायेति, पशू९स्तेन, यो वै देवान्त्साध्यान् वेद सिध्यति ह वा अस्मै, यन्नु कामयेत, इदं मे सिध्येदिती,—मे वै लोका देवाः साध्या, आत्मानमेव दीक्षया स्पृणोति, प्रजामवान्तरदीक्षया संतराम्मेखलामायच्छते, कनीयो व्रतमुपैत्य,—त्वरा श्वात्मानं प्रजा, द्विव्रतेन भवित३व्यं, द्वौ वा ऋतू अहश्च रात्रिश्च, यदेकव्रतः स्यात्पत्नीमन्तरियाद्, या ते अग्ने रुद्रिया तनू,—रिति व्रत९ व्रतयत्ये,—षा वा अग्नेर्व्रतपतिर्देवता, तां प्रीणाति, तस्मा९ हुत९ व्रतयति, यदेतोऽन्यथा व्रतयेद्रुद्र एनमभिमानुकः स्याद्, देवताभिर्वा एष सायुज्यं गच्छति, यो दीक्षते यच्च व्रतोपैर्मार्जयेत श्रमयेयु,—र्यथो यथेदमद्भिरभिरूप्सृष्ट एव९ स्या,—दथ यत्तप्ताभिर्मार्जयते शान्त्या, अथो तेजो वै यदन्नी,—स्तेज एवावरुन्द्धे ॥ १० ॥ १६-१८ [१५८१]

॥ इत्युपरिकाण्डे सप्तमः प्रपाठकः ॥ ७ ॥

[ १० ] मै १,३,७ । तै ६,५,१ । काठ २४,९ । क ३८,२ । र ५५-६ । श.ब्रा ५,५-८ ।

अथाष्टमः प्रपाठकः ।

असुराणा॑ वा एषु लोकेषु पुर आस,—ऽयस्मय्यस्मिंल्लोके, रजतान्तरिक्षे, हरिणी दिवि, ते देवाः स॒स्तम्भ॑ स॒स्तम्भं पराजयन्ता,—ऽनायतना ह्यास॑,—स्त एता॑ ग्रतिपुरोऽमिन्वत, हविर्धानं दिव्या,—ग्नीध्रमन्तरिक्षे, सदः पृथिव्यां, तेऽब्रुवन्,—न्नुपसीदामो,—पसदा वै महापुरं जयन्तीति, त उपासीद॑,—स्तदुपसदामुपसत्त्वं, ताँनेभ्यो लोकेभ्यः प्राणुदन्त, त एभ्यो लोकेभ्यः प्रणुत्ता अहरश्रयन्त, यत्प्रातरुपसदमुपायन्नह्न एना॑स्तेन प्राणुदन्त, तेऽ-ह्नः प्रणुत्ता रात्रीमश्रयन्त, यत्सायमुपसदमुपायन् रात्र्या एना॑स्तेन प्राणुदन्त, ततो देवा अभवन् परासुरा,—स्तय एव॑ विद्वानुपसदमुपैत्यहोरात्राभ्यामेव भ्रातृव्यमेभ्यो लोकेभ्यः प्रणुदते, भवत्यात्मना, परास्य भ्रातृव्यो भवत्य,—थ वै तर्हि नेषुरासीत्, ते देवा एतामिषु॑ समस्कुर्व,-—न्नग्नि॑ मृद्र॑, सोम॑ शल्य॑, विष्णुं कुल्मलं, तेऽब्रुवन्, क इमामिषुमस्यस्यतीति, ते देवा अब्रुव,—न्नयमेव रुद्र इति, सोऽब्रवीद्, भागो मेऽस्त्विति, वृणीष्वे,—त्यब्रुवन् रसोऽब्रवी,—देवमेकश्चनेषुमस्तामीमा॑साता इति, तस्मादेतस्येषुरस्ता न मीमा॑सितव्या ॥ सत्य॑हम्॥ इत्येव ब्रूयात्, ता॑ वै रुद्रो व्यसृज,—द्वेषं हि देवानां क्रूरतम,—स्तयेमाः पुरोऽभिन,—दग्निना वै स तास्तेजसाभिनत्, तस्मादग्निः प्रथम इज्यते, यदन्या देवता पूर्वा॑ यजेद्-वीर्यवतीः स्यु,—रष्टौ कृत्वो जुह्वां गृह्णाति, चतुरुपभृति, पूर्वार्धो हीषोः समाहिततमः, सकृत् परार्दतिक्रामति, सकृद्ध्येवेषुः पराच्यपत,—दतिक्रम्याश्रावयति, यज्ञस्याभिजित्यै, यद-नतिक्रम्याश्रावयेदनभिजितोऽस्य यज्ञः स्यात्, स्रुवेणोपसदो जुहोति, पुरा॑ वा एष जिता-नामन्वारोह, एकामेकाहं जुहोत्ये,—कामेकाहं,—मेका॑ हि त एकाहमजयन्नेकामेकाहं, तिस्र उपसदो जुहोति, त्रयो वा इमे लोका, एषां लोकानामभिजित्या, अग्निना वै मुखेन देवा इमांल्लोकानन्ववायन्नुपसद्भिरसुरान् पराणुद्या,—ऽग्निना वा एतन्मुखेन यजमान इमांल्लोकानन्वे-त्युपसद्भिर्भ्रातृव्यं पराणुद्य, याः सायमनुवाक्यास्ताः प्रातर्याज्याः स्यु,—र्याः प्रातरनुवाक्यास्ताः साय॑ याज्याः स्यु,—स्तेजोमयीर्वीर्यवतीर्भवन्ति ॥ १ ॥ १-२

अपः प्रथमायामवधाय जुहोति,—रजतं मध्यमाया॑, हरितमुत्तमाया,—मेतद्वै बृहस्पति-

[ १ ] तै. ६,२,३ । काठ २४,१०,२५,१ । कपि ३८,३—४ ।
[ २ ] तै ६,२,७ । काठ २५,१ । कपि ३८,४ । वा ५,७,११,३५ । काण्व ५,६—११,१२,३५ ।

देवेभ्यः पूजयनमकरोद्, यत्र पुर२ युध्येयुस्तद्देवाभिर्जुहुयात्, सरो वा एषा यज्ञस्य, तस्मा-
द्यत्किंच प्राचीनमग्नीषोमीयात्तदुपांशु चरन्त्य,—थ वा एतदग्नीषोमीयं प्रति वाच२ विसृजन्ते,
यज्ञमेवाप्त्वा वाच२ विसृजन्ते, घृत२ वै देवा वज्रं कृत्वा सोममघ्न,—न्त्स्रुचौ बाहू, तस्मात्
स्रुचौ सौमीमाहुतिं नाश्नाते, अवाधिपूर्वो एतत् सोम२ यदस्य स्रुचौ चाज्यं चान्तिकमभार्षु,—
यदाहा,—ऽ२शुर२शुष्टे देव सोमाप्यायतामिति, यदेवास्य मन्तः क्रूरमक्र२स्तदक्रूरमक्र,—स्तदा-
प्याययति, सर्वे ऋत्विजा आप्यायन्ति, सर्वे हि तान्तं भिषज्यन्ति, यन्ति वा एश्ते
ऽस्माल्लोकाद्ये सोममाप्याययितुमुदस्थुः, पराञ्चो हि यन्ती,—श्वराः प्रमेतो,—यदाहे,—ष्टा रायो
एष्टा वामानि प्रेषे भगायेति, तेनास्माल्लोकान्नेति, तेनास्मिल्लोके धृता, अनयोर्वा एष गर्भो,
अभ्यामेष आवृश्चते यः सोम२ हन्ति, यदाह, नमो दिवे नमः पृथिव्या इत्या,—भ्यामेव
नमोऽक,—रातिथ्य२ वा उपसदो प्रयाजा,—स्तानुनर्भमाशी,—स्तस्माम होतार२ वृणीते
नापेयम् ॥ सीद होतः ॥ इत्येवाह चतुर्व्रतास्तिस्र,—श्चत्वारिहीपोः पर्णानि, त्रिव्रतस्तिस्र,—स्त्रि-
पन्धिहीपुः, भृक्ष२ शल्यः कुल्मलं, द्विव्रतास्तिस्रो, द्विपन्धिहीपुः, शल्यश्च कुल्मलं च,-
—कव्रतास्तिस्र, एका श्होवेषु,—रेषा वै परोवरीयसी दीक्षा कनीयो व्रतमुपैति, ज्यायाश्सं
लोकमभिजयत्यै,—कव्रतस्तिस्रो, द्विव्रतास्तिस्र,—स्त्रिव्रतस्तिस्र,—श्चतुर्व्रतस्तिस्र, एषा वा
उत्कामन्वी स्वर्गकामस्यो,—त्तरमुत्तर२ श्वः श्वः श्रेयान्भवति य एव२ वेद, यद् द्वादशाग्निष्टोम-
स्योपसदः स्युरशान्ता निर्दहेयु,—र्यत्ति२स्रोऽहिनस्य, यथा गरीयान् भारं उग्निहो निभ्रिणा-
स्येयं तत्, तत्तिस्र एवाग्निष्टोमस्योपसदः कार्या, द्वादशाहिनस्य सवीर्यत्वाय ॥ २ ॥ ४--६
अभ्यधो वै देवेभ्यो यज्ञ आसीत्, तेनाविदु,—रिह वा स इह चेरय,—स्ति
यज्ञ, इति त्वविदु,—स्तेन वै सश्सृष्टिमैछ२,—स्तं प्रपमैछ२,—स्तन्नाविन्दु२,—स्त२
यया२स्युपर्युपरि नात्यपत२,—स्तमिन्द्र उपर्युपर्यत्यकामत्, तमचायत्, सोऽचे,—दचि-
केद्धे मेति, सोऽब्रवीश्त्, कोऽसा इत्य,—हं दुर्गे हन्तेत्य,—थ कस्त्वमसीत्य,—हं दुर्गादाह-
र्तेति, सोऽब्रवीद्, दुर्गे वै हन्तावोचथा, अय२ वराह आमुरो एकविंश्शत्याः पुरां पारेऽ-
श्ममयीनां, तस्मिन्नसुराणा२ वसु वाममन्त,—स्तं जहीति, तस्येन्द्रो दुर्भूल्याभ्यागत्य पुरस्ता- ७
च्छिरो हृदयं प्रावृथ,—देतद्वा एषाभ्यनुक्ता ॥

[सीद होतः०। ऋ २,३६,८. तै म ३,५,११,१,१२,२]
[१] तै ६,२,४। काठ २५,२। कपि ३८,५।

अतिनिधा विधुरेणा चिदस्ता त्रिःसप्त सानु संहिता गिरीणाम् ।
न तद्देवो न मर्त्यस्तुतुर्याद्यानि प्रवृद्धो वृषभश्चकार ॥ ८

इति सोऽब्रवीद्, दुर्गे वा आहर्तावोचथा, एतमाहरेति, तꣳ वै विष्णुराहरद्, यज्ञो वै विष्णु,—र्यज्ञो वै तद्यज्ञमसुरेभ्योऽध्याहरद्, यज्ञेन वै तद्यज्ञं देवा असुराणामविन्दन्त,—तद्वा एषाभ्यनूक्ता ॥ ९

विश्वेत्ता विष्णुराभरदुरुक्रमस्त्वेषितः ।
शतं महिषान् क्षीरपाकमोदनꣳ वराहमिन्द्र एमुषम् ॥ १०

इति तद्वै देवा यज्ञमविन्दन्, यद्वै तद्यज्ञमविन्दꣳस्तद्देवयजनस्य देवयजनत्वꣳ, यद्देवयजन-मिच्छन्ति यज्ञमिच्छन्ति, यद्विन्दन्ति यज्ञꣳ विन्दन्ति, यद्वाव यजमानो जोषयते तद्देवयजनꣳ, यज्ञꣳ वावैतद्यजमानो जोषयतेऽसुराणाꣳ वा इयमग्र आसीद्, यावतीमपश्य परापश्यꣳस्तद्देवानां, ते देवाः सालावृकीमब्रुवन्, यावतीयं त्रिः समन्तं पर्येति तदस्माकमिति, सा वा इमां त्रिः समन्तं पर्यैत्तद्वै देवा इमामविन्दन्त, तद्वेद्या वेदित्वꣳ, विष्णुꣳ वै देवा आनयन्वामनं कृत्वा, यावदयं त्रिर्विक्रमते तदस्माकमिति, स वा इदमेवाग्रे व्यक्रमता,—ऽथेदमथाद,—स्तद्वै देवा इदं सर्वमविन्दन्त, तद्वेद्या वेदित्वꣳ, सैनां वा इयं पृथिवी वेदि,—रियं मे सल,—मिति ह स्मैवास्या यजमानः परिगृह्णीते, यावतीं वै यजमानो वेद्याः करुते तावतीं तावत्पृथिव्या जयति, तस्मान्महतीं कार्यां ज्यायसी ज्यायसी, देवाश्च वा असुराश्चास्पर्धन्त, तद्यत्किंचासुराणाꣳ स्वमासीत् तद्देवा वेद्याविन्दन्त, तद्वेद्या वेदित्वं, तेषाꣳ यत् प्रियꣳ वस्वासीत्तेनापाधाव,—न्न-नेन चिन्मुच्यामहा इति, तद्देवा उत्तरवेद्याविन्दन्त, तदङ्गुरꣳ वै श्रेयो निदामहीति, तदुत्तरवेद्या उत्तरवेदित्वं, तद्य एवꣳ विद्वान्वेदिं चोत्तरवेदिं च कुरुतेऽभिपूर्वमेवं सपत्नस्य भ्रातृ-व्यस्य यद्य वेदो वृञ्जाने एति ॥ ३ ॥ ११

पञ्चत्रिꣳशत् प्रक्रमाः प्राची, चतुर्विꣳशतिरग्रेण, त्रिꣳशज्जघनेन, तथा विराजा संमिता, —ऽथो छन्दाꣳसि वै विराड्, छन्दाꣳसि वा अस्यैतद्यज्ञमुखे युनक्त्ये,—तद्वा एषाभ्यनूक्ता ॥ १२

[ अतिनिधा विधुरेणा० घका८ । ऋ ८,९६,२ । विश्वेत्ता विष्णुराभरद्० । ऋ ८,७७,१०, नि ५४ ]
[ ४ ] १ ३,४१ । काठ २५,३ । कपि ३८,६ ।

इन्द्राणी पत्या सुजितं जिगायोदंशेन पतिविद्ये बिभेद ।
त्रिंशदस्या जघनं योजनान्युपस्था इन्द्रं स्थविरं बिभर्ति ॥ १३

इति, यद्वाव प्राचीनप्रवणं तद्देवयजनं, प्राञ्चं हि तं शयानमविदन्,—अथ यत् प्राचीनप्रवणमुदीचीनापनतं तद्यजेत, यः कामयेतो,—भयोर्लोकयोर्ऋध्नुयामित्यु,—भयोर्वा एतल्लोकयो,—रुभयोरेव लोकयोर्ऋध्नोत्य,—थ यस्य देवयजनस्योत्तरोदन्यद्देवयजनं तद्यजेत, यः कामयेता,—ऽभि मोत्तरो यज्ञो नमेदित्ये,—तद्वा उत्तरावन्नाम देवयजन,—मभ्येनमुत्तरो यज्ञो नमत्य,—थ यस्य देवयजनस्य मध्यतो बहुला ओषधयस्तत्पशुकामो यजेत, पशवो वा ओषधयः, पशुमान् भवति, यत्समं प्रतिष्ठितं तद्गतश्रीर्यजेत, प्रतिष्ठितं वा एतत्, प्रतिष्ठित एष यो गतश्री,—स्तदेवैनं प्रतिष्ठापयति, पापो हि स, ततः प्रच्यवमानो, ऽथ यस्य देवयजनस्यापः पुरस्तात्तद्यजेत, यः कामयेता,—ऽभि मोत्तरो यज्ञो नमेदित्ये,—तद्वै पुरोहविर्नाम देवयजन,—मभ्येनमुत्तरो यज्ञो नमत्य,—थ यस्य देवयजनस्य पन्थाः पुरस्तादिरिणं वा कर्तो वा भ्रातृव्यवान् यजेते,—तद्वा आर्तं देवयजनं सदेवं, यद्धि देवयजनादेवयजनमुच्छिंषेद्भ्रातृव्याय लोकमुच्छिंषे,—दथ यस्य देवयजनस्याहवनीयादन्याः प्राचीरापो धावन्ति गार्हपत्यादन्याः प्रतीचीस्तद्यजेत यं तल्पे वा पात्रे वा मीमांसेर,—ननुपक्तो हि वा एष पाप्मना, ऽथैतं मीमांसन्त, एतद्वै व्यावृत्तं पाप्मना, पाप्मनैवैनं व्यावर्तयन्ति, यद्वै यज्ञः संतिष्ठते प्राचीनमस्य संमृद्धमेति प्रतीचीनं व्यृद्धं, पशवो वै यज्ञस्य समृद्ध,—मापः खलु वै पशवो, यत् प्रत्यङ्ङर्थमभ्यवेयाद्यज्ञस्य व्यृध्येन व्यृध्येता,—ऽथ यत् प्राङ्वमर्थमभ्यवैति यज्ञस्य वा एतेन समृध्येन समृध्यते, यत् स्युम्नतं तद्भ्रातृव्यवान् यजेत, यस्याहवनीयं च हविर्धानं चान्तरोन्नतं, यस्य हविर्धानं च सदश्चान्तरोन्नतं, यस्य सदश्च गार्हपत्यं चान्तरोन्नत,—मतो वै विष्णुरिमांल्लोकाननुदजयद्, विष्णोरेवोज्जितमन्विमांल्लोकाननूज्जयति, एभ्यो लोकेभ्यो भ्रातृव्यं नुदते, ऽथ यस्य देवयजनस्य दक्षिणत उन्नतं तद्भ्रातृव्यवान् यजेत,—तां वै दिशं देवा असुरान् प्रणुद्य स्वर्गं लोकमाय,—न्नेभ्योऽमुमादित्यं परिधिं पर्यदधुरपुनरामावाय,—तां वा एतद्दिशं यजमानो भ्रातृव्यं प्रणुद्य स्वर्गं लोकमेत्य,—स्मा अमुमादित्यं परिधिं परिदधात्यपुनरामावाय, स्थले यजेत यः कामयेतो,—भयेषां देवमनुष्याणां प्रकाशं गच्छेयमिति, प्रकाशो वै नामैतद्देवयजन,—मुभयेषां देवमनुष्याणां प्रकाशं गच्छत्य,—भिवल्गमानं याजयेत्, परोक्षं गुहा वनं परोक्षं

पृष्ठान्यपेयुः, परोक्षं वा एष यमभिशंसन्ति, परोक्षमेवास्मादुहा पापीयांसं वाचं करोत्य-थ यस्य होता प्रातरनुवाकमनुब्रुवन्नग्निमपः सूर्यं तानि पश्येत्, तद् ब्रह्मवर्चसकामो यजेत, ब्रह्मवर्चसं वा अग्नि,—र्ब्रह्मवर्चसमापो, ब्रह्मवर्चसमस्मा आदित्यो ब्रह्मवर्चसमेव संदधाति, ब्रह्मवर्चसी भवत्य,—थ यस्य देवयजनस्यान्या अन्या मध्यतो बहुला ओषधयो, ऽतो वा अङ्गिरसः पशूनसृजन्त, तद् पशुकामो यजेता,—ऽथ यस्य देवयजनस्य मध्यत उन्नत,—मतो वा अङ्गिरसः स्वर्गं लोकमायं,—स्तत्स्वर्गकामो यजेत, निर्वस्केऽभिचरन् यजेत, यथैवैत निर्णयत्येवं तं निर्णयति यमभिचरति, यत् कार्यमिव स्यात् तद्यजेत, यः कार्य इव स्या,—दात्मा वै देवयजनं, करोत्येवैनं, ये युवान आर्षेया ऋत्विजो वेक्षपस्तद्देवयजनं, तस्मादाहु,—र्युवैवर्त्विजीना इत्य,—प्रिर्वाव देवयजनं, तद्य एवं विद्वान् यत्रैव क्वचाग्निमाधाय यजते देवयजन एव यजते ॥ ४ ॥ १४

यद्वा अस्या यज्ञियं मेध्यं यत्संदेवं तदुत्क्रम्यातिष्ठदन्तरा देवासुरान्त्संयतान्त्सिंहीरूपमिव भूत्वा, तेऽविदु,—र्यतरान्वा इयमुपावर्त्स्यति त इदं भविष्यन्तीति, तस्यां वा उभय ऐच्छन्त, सा नान्यतरांश्चनोपावर्तत, तां देवा अपाशासु,—रुप ना आवर्तस्वे,—ति साब्रवीद्, भागो मेऽस्त्विति, वृणीष्वे,—त्यब्रुव,—न्त्साब्रवी,—न्मामेव पूर्वामग्नेर्व्याघारयात, स यत्कामो मां व्याघारयात्तमेव स काममश्नुवदिति, तां देवाः पूर्वामग्नेर्व्याघारयं,—स्ततो देवा अभवन्, परासुरा,—स्तद्य एवं विद्वानेतां पूर्वामग्नेर्व्याघारयति भवत्यात्मना, परास्य भ्रातृव्यो भवति, यद्वै तदुत्क्राम्यातिष्ठदन्तरा देवासुरान्त्संयत्तान्त्सिंहीरूपमिव भूत्वा, सा वा उत्तरवेदि,—र्स्वसायनी मेऽसीति, तथा हि तं तामविन्दन्त, विचायनी मेसीति, विचा हि ते तामविन्दन्ता,—ऽवतान्मा नाथितमिति, नाथितां हि सा तानावद,—व्ताव्यथितमिति, व्यथितां हि सा तानांव,—द्देतदेतद्वा एतया देवा असुराणामविन्दन्ते,—तदेतदेवैतया यजमानो भ्रातृव्यस्य वृङ्क्ते, ऽग्ने अङ्गिरो ३योऽस्यां पृथिव्यामध्यसीति, य एवेषु त्रिषु लोकेष्वग्नयस्तानेवावरुन्द्धे, विदेरग्ने नभो नाम यत्त इति, नभो हि नाम ३सोऽग्निरासीज्जानुदघ्ने सेयु,—मेतावती वा अस्याः पृथिव्या ऊर्जं यज्ञियं, तदेवावरुन्द्धे, सिंहीरसि, महिषीरसीति, सिंहीरूप-

---

[५] मै १,२,८। ते ६,२,७—८। काठ २५,६। कपि ३९,१—४। वा ५,९—१३,३३,३०। काण्व ५, १३—१८,३१,३०।

मित्र हि तन्मुहिषीरूपमिव भूत्वातिष्ठद्, देवेभ्यः शुन्धस्व, देवेभ्यः शुम्भस्वेति, देवेभ्य
एवैनाꣳ शुन्धन्ति, देवेभ्यः शुम्भन्ति, निःसारयति, यद्देवास्या उद्घ्नन्तः क्रूरमक्रꣳस्तद्-
क्रूरमक, —स्तन्निःसारयती, —न्द्रघोषास्त्वा पुरस्ताद्वसुभिः पान्त्वित्ये, —तद्देवꣳत्या वा इमा दिशो,
यथादेवतमेवैनां प्रोक्षी, —दतो वै देवा असुरान्मनसा विनुद्य स्वर्गं लोकमायꣳ, —स्त एता देवता
अन्ततोऽदधतासुराणामनन्ववभावाया, —ऽसौ वा एतद्यजमानो भ्रातृव्यं मनसा विनुद्य स्वर्गं लोक-
मेति, स एता देवता अन्ततो धत्ते भ्रातृव्यस्यानन्ववभावाय, तेऽकामयन्त, सपत्नं भ्रातृव्यꣳ
सहेमहीति, सिꣳहीरसि सपत्नसाही स्वाहेति, तमेव तेन काममाश्नुवत, सपत्नं भ्रातृव्यꣳ
साढ्वा तेऽकामयन्त, पशवो नः स्युरिति, सिꣳहीरसि रायस्पोषवनिः स्वाहेति, तमेव तेन
काममाश्नुवत, सपत्नं भ्रातृव्यꣳ साढ्वा पशून् भित्वा तेऽकामयन्त, प्रजा नः स्यादिति,
सिꣳहीरसि सुप्रजावनिः स्वाहेति, तमेव तेन काममाश्नुवत, सिꣳहीरस्यादित्यवनिः सजातवनिः
स्वाहेत्या, —दित्याभिर्हि सा प्रजाभिः सह, तेऽकामयन्त, देवा नो यज्ञꣳ विद्युरिति,
सिꣳहीरस्या, —वह देवान् देवायते यजमानाय स्वाहेति, तमेव तेन काममाश्नुवत, भूतेभ्य-
स्त्वे, —त्युद्दिशति, देवा ꣳहोर्न भूता, यत्र वा अꣳद्दोऽग्निहोत्रादपाक्रामत्स सर्वेषु भूतेष्ववसद्,
यो पशुष्वयस्तामनाछिन्नस्तुकस्यान्तराशृङ्गमवसद्, याꣳ वनस्पतिषु तौ पूतुद्रौ, यामोषधीषु
साꣳ सुगन्धितेजने, यत्संभारान्त्संभरति यद्देवाग्नावग्नेर्न्यक्तं तत्संभरति, यानि वा अꣳद्दोऽग्निर-
स्थान्यधूनुत ■ पूतुद्रुरभवद्, यन्माꣳसं तद्गुग्गुलु, यत् पूयितद्युपश्लिष्टꣳ स सुगन्धितेजनो,
यद्देवैते संभारा भवन्ति यद्देवाग्नावग्नेर्न्यक्तं तस्यावरुद्ध्यै, विश्वायुरसि, पृथिवीं दृꣳहेत्ये, —पाꣳ
ꣳहोतैं लोकानाꣳ विधृत्यै परिधीयन्ते, ध्रुवक्षितिरस्य, —न्तरिक्षं दृꣳहेत्य, —न्तरिक्षꣳ हि यज्ञो,
ऽच्युतक्षिदसि, दिवं दृꣳहेति, दिवमेवैनमजीगम, —दग्नेर्भस्मास्य, —ग्नेः पुरीषमसीत्य, —ग्नेꣳ-
होतद्भस्मा, —ऽग्नेः पुरीषं, देवपात्रꣳ वा उत्तरवेदिं, देवेभ्यो देवपात्रं प्रोच्यꣳ, वैभ्राजा देवा,
यदाह, विभ्राड् बृहत्पिबतु सोम्यं मध्विति, देवेभ्यो वा एतद्देवपात्रं प्राह, प्र यसीयमः
पात्रमाप्नोति, ब्राह्मणं तु पात्रे न मीमाꣳसेत यः पात्रिय इव स्याद् ॥ ५ ॥ १५
एतावती वा इयं पृथिवी यावती वेदि, —रपरिमितावेतद्भ्रातृव्यं निर्भज्य यजमानाय परि-
गृह्णात्य, —क्षꣳ वा अमेध्यं, —मापो हवि, —र्यत्प्रोक्षति मेध्यमेवैनत्करोत्य, —क्षꣳ वा अमेध्यꣳ,

[ विभ्राड् बृहत्पिबतु० । ऋ १०,१७०,१; सा ६२८,१४५३ ]
[ ६ ] काठ २५,७ । कपि ३९,२,५ । वा ०,०,९,२०,१८,२८,२०,३० । काण्व ०,३,१०,२७,१९,४०,०२ ५० ।
मै० ३५

यद्बर्हिः स्तृणाति मेध्यामेवैनां करोत्य,—वती वा इयं पृथिवी यावती वेदिः, प्रजा बर्हि,—यद्बर्हिः स्तृणात्यस्यां वा एतत् प्रजाः प्रतिष्ठापयति, यजमानो वै प्रस्तरः, प्रजा बर्हि,—यत्प्रस्तरमुत्तरं बर्हिषः सादयति यजमानं वा एतदुपरिष्टादासां प्रजानां दधात्य,—थ यत्तृणे अन्तर्दधाति तेन यजमानो यजमानेन व्यावर्तते, बहुलं बर्हिः स्तृणात्य,—क्षोधुका अस्य पशवो भवन्ति, प्राचीनं बर्हिः स्तृणाति, प्राङ् हि यज्ञो, यत्प्रतीचीनं स्तृणीयात् प्रत्याग्राज्यास्य राष्ट्रं घातुकं स्याद्, देवेषुवै वेदि,—र्यत्र वै देवेभ्यो संनतया कामयते तद्यन्ति, यद्वेदिं कल्पयति देवेषु वा एतत्संनमति, तया संनतया यत्र यजमानः कामयते तद्यन्ति, त्रयो वै पूर्वेऽग्नयः प्राधन्वन् हव्यं देवेभ्यो वहन्तो, वषट्कारः प्रावृश्च,—देथ श्योऽयमिदानीं स भीषा-पाद्रवद्वीदेगु स आरिष्यतीति, तं देवा अपाशासु,—रुप मा आवर्तस्वेति, सोऽब्रवीद्, भागो मेऽस्त्विति, वृणीष्वे,—त्यब्रुव,—न्त्सोऽब्रवीत्, त्रयो वै मे पूर्वे भ्रातरः प्राधन्वन् हव्यं देवेभ्यो वहन्तो, वषट्कारः प्रावृश्चत्तेषां भाश्गोऽस्त्विति, वृणीष्वे,—त्यब्रुव,—न्त्सोऽब्रवीद्, यदेव किंचाहुतं बहिष्परिधि स्कन्देत्तदेव तेषां भागधेयमसदिति, तेषां वा एतद्भागधेय,—म-स्थन्वन्तो हि वै त आसु,—न्थ ते प्राधन्व,—न्त्सोऽब्रवी,—दुस्थानि नु भुविष्ये, ऽथोपाव-रस्यामीति, तं वा अन्वायं,—स्ते सुमन्तं पर्यविशन् यज्ञस्य गोपीथाया,—ऽयं वाव यज्ञायो-पधीयते, ऽयं यजमानाया,—ऽयं भ्रातृव्याये,—मां प्रतरं करोती,—ममपतरं, यज्ञेन वा एतद्यजमानं प्रतरं करोति, यज्ञेनास्य भ्रातृव्यमपतरं करोति, संधिं प्रतिजुहोति, न श्हामि-माहुतिस्तरति, प्रयत एवैनान् प्रीणात्य,—थो सुतीर्थेन वा एतदोहुतीस्तारयत्य,—यं वाव भूपति,—रयं भुवनपति,—रयं भूतानां पति,—रेथ श्योऽयमिदानीं स भूति,—यदाहुतं बहिष्प-रिधि स्कन्देत्तदभिमन्त्रयेत॥ भूपतये स्वाहा, भुवनपतये स्वाहा, भूतानां पतये स्वाहा॥ इति भागधेयं वावैषामेतद्, प्रीणात्येवैना,—न्थो हविषा वा एतत् स्कन्नेन द्वितीयामाशिषमवरुन्द्ध, एतद्ध स्म वा आहारुणं औपवेशिः, किंमु स यज्ञेन यजेत यो हविषा स्कन्नेन द्वितीयामाशिषम-वरुन्धं न विद्यादिति, तद् द्वितीयामेवैतेनाशिषमवरुन्द्धे ॥ ६ ॥ १६-१८

ये पुरा ग्रन्थयो भवन्ति तान् विस्रंस्यन्ति मानुषस्य व्यावृत्त्यै, प्रणेनिजति, यद्वैनयो-

[७] मै १,१,९। मै ६,१,९। काठ १५,८। कपि. ४०,१। बा ५,१४१८-२१,११,४,३७,२,५,। काण्व. ५,१९,२४-२७ १०,४,३७,२।

रभिर्निपणꣳ शमलममेध्यं तच् शुन्धन्ति, युञ्जते मन उत युञ्जते धिया, इति जुहोति, युक्त्या एव, सावित्र्या जुहोति, सवितृप्रसूत एवैने प्र वर्तयति, हविर्वै हविर्धाने, यदुपानक्ति हविष्कृत एवैने प्र वर्तयति, अथो अभिघृते एवैने पत्न्युपानक्ति, यद्वै पत्नी यज्ञे करोति तन्मिथुनं, मिथुनत्वाय वै पत्न्युपानक्त्य,—थो वै पत्न्या यज्ञस्यान्वारम्भो यद्यज्ञे करोत्य,—न्वारम्भाय वै पत्न्युपानक्ति, प्राचीनमुपानक्ति, प्राङ् हि यज्ञ,—स्त्रिरन्यत्त्रिरन्यदुपानक्त्य,—परिमितꣳ हि मनुष्या उपाञ्जन्ति, दक्षिणत उपानक्त्यु,—दीची ह्येते मनुष्यलोकमुपावर्तेते, निर्ऋतिगृहीतो वा एष उभयतः संदृष्टः शुष्को, यदुपानक्ति शर्मयत्येव, शुष्को वा एष दुर्वाग्यजमानस्य गृहमावदति, स ईश्वरोऽशान्तो यजमानꣳ हिꣳसितो,—स्तदनुगृह्णन्तो यन्ति, यधुरक्ष्वेदेत्, सुवागाय देव दुर्यानिति वदेच्, शर्मयत्येवा,—ऽथोऽक्षमयित्वैवाशिषमाशास्ते, हविर्वै हविर्धाने, स्तीर्णे वै बर्हिषि हविरासादयन्ति, तस्मात् प्रस्तरꣳ स्तीर्णे प्रवर्तयन्ति, हविर्वै हविर्धाने, अनूच्यमानासु वै सामिधेनीषु हविरासादयन्ति, तस्मात् प्रवर्त्यमानयोर्होतान्वाहे,—मे वा एते, इमे वा एतत् प्रवर्तयन्ति यद्धविर्धाने, तस्मात् पूर्वस्या जनताया अपरा जनता क्षेत्रमभ्यारोहुका, तं यर्हि प्रवर्तयेयुस्तर्हि होतानुब्रुवन्मनसा पदा तां जनतां प्रतिनुदे,—दपर्जन्यं भयं नुदेति, विद्वा एषा, विशꣳ वा एतत् प्रतिनुदते, ऽनभ्यवचारुकास्य विट् क्षेत्रं भवति, नीयानꣳ वै रक्षाꣳसि यज्ञमत्रयन्ति, यद्वर्त्मनि जुहोति रक्षसामपहत्यै, वैष्णव्या जुहोति, विष्णुर्वै यज्ञो, विष्णुनैव यज्ञेन यज्ञाद्रक्षाꣳस्यपहन्ति, यद्गायत्र्या जुहोतीमां तेनाक्रमते, यत्त्रिष्टुभान्तरिक्षं तेना,—ऽथ यदाहवनीयं गच्छतः स्वर्गं तेन लोकं, त्रीन् प्रक्रमान् प्रतिविक्रमते, त्रयो वा इमे लोका, इमानेव लोकान् यजमानायोच्छिꣳषति, वैष्णवमसि, विष्णुस्त्वोत्तभ्नात्विति, वैष्णवꣳ हि हविर्धानं, दिवो विष्ण उत वा पृथिव्या, इति दक्षिणस्य हविर्धानस्य मेथीन्निहन्ति, मुखत एव यज्ञस्याशिषमवरुन्द्धे, यमध्वर्युः प्रथमं ग्रन्थिं ग्रथ्नाति तं प्रथमꣳ विस्रꣳसयति, यदन्यं पूर्वꣳ विस्रꣳसयेदमेहेन प्रमीयेत, विष्णोर्नु कꣳ वीर्याणि प्र वोचमित्युत्तरस्य हविर्धानस्य मेथीन्निहन्ति वैष्णव्या, वैष्णवꣳ हि हविर्धानꣳ, स्वयैव देवतया, यो अस्कभायदुत्तरꣳ सधस्थमित्य,—सौ वा उत्तरꣳ सधस्थ,—ममुष्मिन्नेव हविर्धानꣳ संमिनोति॥

१९

[ युञ्जते मन उत०...। ऋ ५,८१,१, तै सं १,२,१३,१ ४,१,१,१, तै. आ ४,२,१। दिवो ( वा ) विष्ण उत० ...। अथर्व ७,२६ ८। विष्णोर्नु कं वीर्याणि० । ऋ १,१५४,१, अथर्व ७,२६ १, तै स १,२,१३,२। ]

*

आ वामुपस्थमद्रुहा देवाः सीदन्तु यज्ञियाः । इहाद्य सोमपीतये ॥ २०
इति ये एव देवा यज्ञियास्तान् हविर्धाना आसादयति, ताꣳ श्वो भूते ऽभियजते,
दण्डो वा एतदौपरो वषट्कारेण निरहन्, यच्छर्दिरभिनिदधात्यपिहित्या अच्छिद्रत्वाय, विष्णोः
पृष्ठमसीत्य,—द एवं, विष्णो रराटमसीत्य,—द एवं, विष्णोः शिप्रे स्था, इतीमे एवं,
मुखतो वा एतत्, स्वया देवतया शिरो यज्ञस्य संभरति, विष्णोः स्यूरसीति, तस्मादिदꣳ
शिरः षोढा निष्कृतं, प्र तद्विष्णुः स्तवते वीर्येणे,—ति प्राङुत्क्रम्य वदत्य,—तो वै विष्णुरिमां-
ल्लोकानुदजयद्, विष्णोरेवोज्जितिमन्विमाँल्लोकानुज्जयति, एभ्यो लोकेभ्यो भ्रातृव्यं नुदते ॥
॥ ७ ॥ २१
देवस्य त्वा सवितुः प्रसव इति, सवितृप्रसूत एवैनामादत्ते, ऽश्विनोर्बाहुभ्यामित्य,—
श्विनौ वै देवानामध्वर्यू, पूष्णो हस्ताभ्यामिति, देवताभिरेवा,—ऽभ्रिरसि, नारिरसीति,
क्रूरमिव वा एतद्यदभ्रिः, शमयत्येवे,—दमहꣳ रक्षसो ग्रीवा अपिकृन्तामी,—त्याह रक्षसा
ऽन्तरायै रक्षसामन्तरित्या, इदमहꣳ सोमे समानो योऽसमानोऽरातीयति तस्य ग्रीवा अपिकृन्ता-
मीति, समानो वा ह्यसमानो वारातीयति सर्वमेवैतया पर्याप, प्राणा वा उपरवाः, शिरो
हविर्धानꣳ, शीर्षन्वा इमे प्राणा,—स्तस्माद्धविर्धाने, ऽन्तर्वा इमे शीर्षन् प्राणा,—स्तस्माद-
न्त,—श्चत्वारो वा इमे शीर्षन् प्राणा,—स्तस्माच्चत्वारः संतृणाः परः, संतृणा हि परः प्राणा,
निधृता उपरिष्टाद्, विधृता ह्यमी उपरिष्टात् प्राणाः, पूर्वार्धे वा इमे मुखस्य प्राणा, एतत्
खलु वै हविर्धानस्य पूर्वार्धꣳ यद्दक्षिणꣳ हविर्धानं, तस्माद्दक्षिणे हविर्धाने, बृहन्नसि बृहद्ग्रावा
इति, देवा ह्येव बृहद्, बृहतीमिन्द्राय वाचꣳ वदेत्यै,—न्द्रो हि यज्ञो, रक्षोहणꣳ वलगह-
नमित्या,—ह रक्षसा ऽन्तरायै रक्षसामन्तरित्यै, वैष्णवीमिति, विष्णुर्हि यज्ञो, ऽसुरा वा
एतान् वलगान् देवेभ्यः प्राणेषु न्यखनꣳ,—स्तान् बाहुमात्रेऽन्वविन्दꣳ,—स्तस्माद्बाहुमात्रे
खेयꣳ, यद्वाव कृत्या यच्च शफꣳ यदभिचरितं तदेतदुद्वपति, प्राणा वा उपरवा, यदव-

---

[ आ वामुपस्थमद्रुहा० पीतये। ऋ २,४१,२१, नि ९,३७। प्र तद्विष्णुः स्तवते० धिष्वा। ऋ १,१५४,२, अथर्व ७,२६,२—३; तै ब्रा २,४,३,४; नि १,२० ]

[ ८ ] मै १,२,१०। तै ६,२,१०—११। काठ २५,९। कपि ४०,२। वा ५,२२—२३,२५—२८,६,१,३। वा०श ५,२८—२९,३१—३६,६,१,४। [ देवस्य त्वा सवितु०। अथर्व १९,५१,२ ]

सिञ्चति तस्मादिम उदन्वन्तः प्राणाः, प्राणा वा उपरवा, यदवस्तृणाति तस्मादिमे लोमशाः प्राणा, अथ यदवसिञ्चत्यव च स्तृणाति मस्तिष्को वा एषं क्रियते, हनू अधिषवणे, शिरो हविर्धानꣳ, शीर्षन्वा इमे हनू, तस्माद्धविर्धाने, ऽन्तर्वा इमे शीर्षन् हनू, तस्मादन्तरिमे वा एते यत्संतृन्द्या,—दिमे एव संतृन्द्यात्, तत्संपाद्य एवं, अङ्गुलमन्तरा कार्यं, अङ्गुलꣳ ह्यदि,—मन्तरा वै नाकेत्व, शिरो हविर्धानं, पृष्ठमाग्नीध्र,—मुदरꣳ सदः, प्राङ् हिं यज्ञः संहितो, हनू अधिषवणे, जिह्वाधिषवणं, ग्रावाणो दन्ता, मुखतो वा एतत् प्रजापतेः सोमं पिबन्ती,—न्द्रो वै वृत्रमहन्,—न्त्स इमाः प्राविशत्, तं देवताः प्रैषमैच्छꣳ,—स्तं नाविन्दꣳ,—स्तं भूतान्युपारवन्त, यो नोऽधिपतिरभूत्तमन्विन्दामा इति, तदुपरवाणामुपरवत्वꣳ, यत्त-दुपारवन्त तच्चतुर्धावस्तादुवैच्छ,—न्नेकधा पुरोऽन्वविन्दꣳ,—स्तस्माच्चतुर्धावस्ता,—देकधा पुरो, यदुपरवाननुमृशन्ती,—न्द्रियस्यावरुद्धयै ॥ ८ ॥ २२

पृथिव्यै त्वा, ऽन्तरिक्षाय त्वा, दिवे त्वे,—ति प्रोक्षत्ये,—षाꣳ ह्येषां लोकानाꣳ विधृत्यै मीयते, त्रिः प्रोक्षति, त्रिषत्या हि देवा, अथो त्रयो वा इमे लोका, एभ्य एवैनां लोकेभ्यः प्रोक्षी,—दन्नꣳ वै यवा, ऊर्गुदुम्बरो, यद्यवमतीभिः प्रोक्षत्यूर्जा वा एतदन्नꣳ सम-र्धयत्यु,—क्षꣳ वा अमेध्य,—माषो हवि,—र्यदवसिञ्चति मेध्यमेवैनत् करोत्यु,—क्षꣳ वा अमे-ध्यꣳ, यदवस्तृणाति मेध्यमेवैनत् करोति, पितृदेवत्यꣳ वै निखातममेध्यमन्यदेवत्य,—मस्याः खलु या इमा उत्तमार्ध ओषधयो, यदवस्तृणात्यस्या एवैनामुत्तमार्धे मिनोत्य,—थिरातैया-मु,—दन्नꣳ वै यवा, ऊर्गुदुम्बरो, यद्यवमवास्यत्यन्ने वा एतदूर्जं दधाति, न ह्यन्नमृत ऊर्जो धिनोति, नो द्युर्गतेऽन्नाद्धिनोति, नितानस्त्वा मारुतो निहन्त्वित्ति, मनो वै नितानः, प्राणा मारुता, मित्रावरुणा ध्रुवेण धर्मणेति, मित्रमेवैनां दाधार, वरुणः कल्पयति, विधृत्यै च खलु वा एषा प्रजानां क्लृप्त्यै च मीयते, मित्रावरुणौ वै देवानां धर्मधारयौ, दैवꣳ वा एतद्धर्ममदीधरताꣳ, यदौदुम्बरी, ब्रह्मवनि त्वा क्षत्रवनि पर्यूहामीत्या,—शीरेवैषा, ब्रह्म दृꣳह क्षत्रं दृꣳहेत्या,—शिषु एवैष परिग्रहो, घृतेन द्यावापृथिवी आपृणेति, घृतेनैव द्यावा-पृथिवी व्युनत्त्यु,—दरꣳ वै सदा, ऊर्गुदुम्बरो, यदौदुम्बर्यू,—र्जꣳ वा एतन्मध्यत आत्मनो धत्ते प्रजानां च, प्रजापतेर्वा एतदुदरꣳ यत्सदः, प्राजापत्य उद्गाता, तस्मादुद्गातान्वारभते,

---

[९] मै ३,९,११। ते ६,२,११। काठ २५,१०। कपि ४०,३। श ५.२६,७८; ६,१,१६। कप ५,३३,३६; ६,६२।

यजमानो वा, औदुम्बरी वरिष्ठा कार्या, वर्ष्मैनꣳ समानानां गमयति, विश्वजनस्य छायासी,—ति छदिरभिनिदधाति, गोत्राद्गोत्राद्धि प्रसर्पन्त्य,—दरꣳ वै सदो, यदन्येनान्येन संमिनोति तस्मादुदरमन्यैनान्न् येनामेन संतत, उदरꣳ वै सदो, यदनूचीनं मिनुयात्पराचीनं जग्धमेतीया,—दथ यत्तिरश्चीनं मिनोति तस्माज्जग्धꣳ, सर्वाण्यङ्गान्यनुवेति, प्रजा वा एतत् समीचीनं मिनोति, समीचीरेनं प्रजा अभिसमावर्तन्ते, संयात इव स भवति, समानꣳ सांकाशिनं कार्यꣳ, समाना ह्यमे प्राणा, यं द्विष्यात्तस्याक्ष्णया मिनुयात्, प्राणानस्य मोहयति, प्रमायुको भवति, यदि कामयेत, वर्षेत् पर्जन्या इति, नीचैः सदो मिनुयाद्, वृष्टिमेव नियच्छति, यदि कामयेत, न वर्षेत् पर्जन्या इत्यु,—च्चैः सदो मिनुयाद्, वृष्टिमेवोपाग्रहीं,—न्नवच्छदिरग्निष्टोमे स्यात्, तेजसा त्रिवृता संमितं, पञ्चदशच्छदिरुक्थ्ये, पञ्चदशेन वज्रेण संमितꣳ, सप्तदशच्छदिरतिरात्रे, सप्तदशो वै प्रजापतिः, प्राजापत्या रात्रिरानुष्टुभी, यज्ञक्रतूनामेवैषा व्यावृत्तिः, प्राचीनवꣳशꣳ हविर्धानं मिनोत्य,—र्ध्वा हि द्यौः, प्राचीनवꣳशमाग्नीध्र,—मूर्ध्वꣳ ह्यन्तरिक्षं, तिरश्चीनवꣳशꣳ सद,—स्तिरश्ची ह्ययꣳ, यजुषा हविर्धानं मिनोति, निरुक्ता हि द्यौ,—र्यजुषा सदो, निरुक्ता ह्ययं,—मयजुषाग्नीध्र,—मनिरुक्तमिव ह्यन्तरिक्ष,—मर्धमाग्नीध्रस्यान्तर्वेदि मिनोत्य,—र्धं बहिर्वेद्य,—र्धꣳ ह्यन्तरिक्षस्यास्मिंल्लोक, ऽर्धममुष्मिन् ॥९॥
२३

सुब्रह्मण्यां नभ्राडङ्घारे बम्भारा इत्य,—ते वै देवानाꣳ सोमरक्षय, एतेभ्यो वा अधि छन्दाꣳसि सोममाहरꣳ,—स्ते सोमपीथेन व्यार्ध्यन्त, त एतानि द्वितीयानि नामान्यधत्तमङ्गलेच्छायै, सोमपीथो न उपनमादिति, तस्मादेते द्विनामान,—स्ते वा अन्वायꣳ,—स्ते न प्राप्नुवꣳ,—स्तस्मादेतेऽतिहाय वषट् क्रियन्ते, न हि प्राप्नुवꣳ,—स्तेषाꣳ वा एष लोको यावदभि न्युप्यते, तद्योऽविद्वानाक्रामत्यार्तिमार्छत्य,—थ य एवꣳ विद्वानाक्रामति न स्वदꣳस्यामार्तिमार्छति, तेषाꣳ वा एष भागो यदाघार्यन्ते, त एवास्मै तेनाभीष्टाः प्रीता भवन्ति, यज्ञमुखꣳ वै यजमानो, यत्पवमाने स्तुवते हविर्धाने निहूयन्ते यज्ञमुखादेवाधिविह्रियन्ते, जम्भो वै नामासुर आसीत्, स यज्ञमगिरत्, स आग्नीध्रं न प्राप्नोत्, तमाग्नीध्रात्पुनर्न्यसृज,—देतद्ध जीवं, तस्मादाग्नीध्राद्विह्रियन्ते, दक्षिणतो वै देवानसुरा यज्ञमजयꣳ,—स्त उदञ्चा आग्नीध्रꣳ समातिष्ठꣳ,—स्तमाग्नीध्रात् पुनरभ्यजय,—न्नेतद्वा अनभिजितं, तस्मादाग्नीध्राद्विह्रियन्त, एतत् प्रति वै देवानसुरा यज्ञ-

---

[ १० ] तै ६,३,१ । कठ २६,१ । कपि ४०,४ । श. ५,३१ । [illegible]

अथ नवमः प्रपाठकः ।

यज्ञो वा एष संक्रामन्नेति प्रायणीयादध्यातिथ्य,—मातिथ्यादध्युपसदः, स उपसद्भ्योऽधि प्राङ् प्रणीयते, यदगृहीत्वाज्यानि प्रणयेयुरपघ्नीव यजमान,—मथ यद्गृहीत्वाज्यानि प्रणयन्ति यज्ञं वा एतद्यजमानोऽन्वारभते, प्राञ्चः सोमेन प्रयन्ति, प्राची पत्नी पूर्वमग्निमभ्युदैति, सोमेन वा एतद्राज्ञाभिजयन्तो यन्ति, यस्य वै मनुष्यराजो गृहमागच्छति तस्य वै तर्हि तदैश्वर्यं, यदा वै स ततः प्रायत्यथ तेषां तत्पुनर्भवति, तस्मादाहुरपित्वता इत्य,—पि ह्येषां तस्मिन् भवति, सोमो वा एतद्राजा गृहं प्राप, तस्य वै तर्हि तदैश्वर्यं, यदा वै स ततः प्रच्यवतेऽथ स तेभ्यो विसृजते, तद्वैसर्जनानां वैसर्जनत्वं, त्वं सोम तनूकृद्भ्य इति, यदेव तनूकृतं चान्यकृतं चैनस्तदेवैनानवयजति, द्वाभ्यां गार्हपत्ये जुहोति, द्विपाद्यजमानः प्रतिष्ठित्या, आग्नेय्याग्नीध्रे, ऽन्तरिक्षमेव प्राप्यान्यदेव रूपमकु,—र्वैष्णव्या हविर्धाने, ऽद एव प्राप्य, विष्णुर्वै यज्ञो, विष्णुमेव यज्ञमकु,—रसुरा वा एवं देवानामादित्सन्त, तं देवा असुं कृत्वामुं लोकमहरन्, यदमुमत्या जुहोत्यमुमेवैनं कृत्वामुं लोकं हरन्ति, सर्वेभ्यो वा एष भूतेभ्य आह्रियते, यत्सौम्या जुहोति मनुष्येभ्यस्तेनाह्रियते, यदमुमत्या पितृभ्यस्तेन, यदाग्नेय्या देवेभ्यस्तेन, यद्वैष्णव्या यज्ञाय तेन, सर्वा वा एतत् प्रजा वरुणो गृह्णाति, यत् सौम्या जुहोति मनुष्यांस्तेन वरुणान्मुञ्चति, यदमुमत्या पितॄंस्तेन, यदाग्नेय्या देवांस्तेन, यद्वैष्णव्या यज्ञं तेन, सर्वा वा एतत् प्रजा वरुणान्मुञ्चत्यग्निना वै मुखेन देवा इमाँल्लोकानभ्यजनयन्, गार्हपत्येनामुं लोकं,—माग्नीध्रेणान्तरिक्ष,—माहवनीयेनामुं लोकं, तस्मात् त्रेधा अग्नय आधीयन्त एषां लोकानामभिजित्या, इन्द्राग्नी वा अपरा अग्नी, अग्निरपरा, इन्द्रः पूर्वः, प्रजापतिराहवनीय,—स्तस्मादुपर्युपरि साध्यता, उत्तरो हि पिता पुत्रा,—दुत्तरो भ्रातृव्याद्भवति य एवं वेदा,—ऽग्रेण प्रणयेद्रत्नधाः श्रियं एव परिगृहीत्यै, सौम्यो वै ब्राह्मणो देवतया, स्वयैवैनं देवतया, प्रजा वै पशवोऽग्नयो, रुद्र आहवनीयो, यदग्रेण प्रणयेद्रुद्रायास्य पशूनपिदध्यात्, पश्चादेव प्राङ् प्रणीयः पशूनां गोपीथायो, उर्वन्तरिक्षं वीहीत्य,—न्तरिक्षदेवत्यो वा एष एतर्हि, प्रच्युत इतोऽप्राप्तोऽमुत्रा,—ऽऽदित्याः सद आसीदेत्या,—दितिर्वै यज्ञो, ऽदितिः सोमस्य योनिः, स्व एवैनं योनौ दधाति, देव सवितरेष ते सोम इति, मनुष्येषु वा एष पुराभूद्, देवेष्वेवैनं संप्रादा,—देतत्त्वं देव सोम देवानुपागा इति, देवो

[ १ ] मै १,२,१३। ते ६,३,१। क.ठ. २६,२। कपि ४०,५। श ३,३,४,१९-४,२,७। का ५,४४,४८-५०,२,१०।

३ह्येष देवानुपावर्तेत, इदमहं मनुष्यान्त्सह रायस्पोषेण प्रजया चोपावर्तेता, इत्याशिषमेवा-
शास्ते, नमो देवेभ्यः, स्वधा पितृभ्य इति, नमस्कारो देवाना२, स्वधाकारः पितॄणां,
निर्वरुणस्य पाशादमुक्षीति, वरुणपाशादेवं निर्मुञ्चयत आत्मनोऽहिंसायै स्वरभिव्यख्यमिति,
यज्ञो वै स्व,—र्यज्ञमेवाभिविपश्यति, ज्योतिर्वैश्वानरमित्य,—सौ वा आदित्यो ज्योतिर्वैश्वानर,-
—ग्निना वा एष तन्व२ विपरिधत्ते यो दीक्षते, ऽग्नी रुद्रो, यदग्निना पुनर्यथायथं त३न्वं न
विपरिदधीत रुद्र एनमभिमानुकः स्याद्, यदाहा,—ऽग्ने व्रतपते या तव तनूर्मय्यभूदेषा सा
त्वयि,—ग्ने व्रतपते या मम तनूस्त्वय्यभूदिय२ सा मयीत्य,—ग्निना वा एतत् पुनर्यथायथं तन्व२
विपरिधत्त आत्मनोऽहिंसायै ॥ १ ॥ १

न यूपमछैष्यता होत३व्यं, न हि दीक्षितस्याग्नौ जुह्वति, वैष्णवीमनूच्याछैत्यो, वैष्णवो हि
यूप,—स्तदाहु,—र्होतव्यमेव, परुष्येव जुहोत्यायतना इति, तन्न सूक्ष्य२, यूपस्यैवान्तेऽग्नि
मुपधायाथ होत३व्यं, तदस्मिन्नुभयमक,—र्जुहोत्याह, न दीक्षितस्याग्नौ जुहोत्य,—त्यन्यानगां,
नान्यानुपागामित्य,—ती ३ह्यन्यानैति, नान्यानुपैत्य,—र्वाक् त्वा परेभ्यः परोऽवरेभ्योऽविदमि-
त्य,—र्वाग्घ्येनं परेभ्यः परोऽवरेभ्यो विन्दति, तं त्वा जुषामहे देवयज्याया इत्ये,—तं२ ह्येष
जुषते, जुष्ट२ विष्णव इति, यज्ञायैवैनं जुष्ट२ विष्णवेऽक,—र्विष्णवे त्वे,—ति पर्युनक्ति,
हविर्भूतमेवैन२ वृश्चत्य,—थो अभिघृतमेव, य इत्थ२ वेत्थं वाहु,—र्णो मेधा२स्तोऽपावृत्तो, य
ऋजुरूर्ध्वशल्कः स वाव मेधमुपस्थितो, य ऋजुरुपरिष्टादुपावनतो, योऽधिशाख्यो योनिः स,
यो वा अस्या अधिजायते स योनि,—मानियं२ हि वनस्पतीना२ योनिः, परुषि व्र३श्च्यो,
यद्गुपरुषि वृश्चेद्यथा परुष्पवक्नमेव२ स्या,—दनक्षसंग२ स्थाणुरुच्छिष्यो, यदक्षसंग२ स्थाणुमु-
च्छिश२ष्येद्वज्रो भूत्वा यजमानस्य पशून् प्रतिहन्यात्, पञ्चारत्निः कार्यः, पङ्क्त्या संमितः,
षडरत्निः कार्य, ऋतुभिः संमितः, सप्तारत्निः कार्यः, सप्तपदया शक्वर्या संमितो,
ऽष्टारत्निः कार्यो, गायत्र्या संमितो, नवारत्निः का३र्य,—स्तेजसा त्रिवृता संमितो, दशा-
रत्निः कार्यो, विराजा संमिता, एकादशारत्निः कार्यः, त्रिष्टुभा संमितो, द्वादशारत्निः का३र्यो,
जगत्या संमित,—स्त्रयोदशारत्निः कार्य,—स्त्रयोदशेन प्रजापतिना संमितः, पञ्चदशारत्निः कार्यः,
पञ्चदशेन वज्रेण संमितः, सप्तदशारत्निः कार्यः, सप्तदशेन प्रजापतिना संमिता, एकविं२-

[ २ ] मै. १,२,१४ । तै. ६,३,३ । काठ २६,३—४ । कपि ४१,१—२ । वा ५,४२ । काण्व ५,५२—५३ ।

शत्यरत्निः कार्य, एकत्रिंशेन संमित,—स्त्रयोविंशत्यरत्निः कार्य,—स्त्रयोत्रिंशेन संमितः, पञ्चविंशत्यरत्निः कार्यः, पञ्चत्रिंशेन संमितः, सप्तविंशत्यरत्निः कार्य,—स्त्रिणवेन संमिता, एकत्रिंशदरत्निः कार्य, एकत्रिंशेन संमित,—स्त्रयस्त्रिंशदरत्निः कार्य,—स्त्रयस्त्रिंशेन संमितो, यावान् पुरुष ऊर्ध्वबाहुस्तावान् का३र्यो यदि वा यावान् रथे तिष्ठन्, यावान् नं पुरुष ऊर्ध्वबाहुः सैतस्यानुमा मात्रा, ऽथ ततो वर्षीयान्वर्षीयानेव का३र्यो, यो बहुशाखो बहुपर्णः स कार्यो भूम्न एव, भूमानं ह्येष एतस्य जग्राह, भूमानमस्य गृह्णाति, २
भूमानमस्य पशवोऽनुपतिष्ठन्ते ॥ २ ॥

ओषधे त्रायस्वैनमित्या,—ह त्रात्या एव, स्वधिते मैनं हिंसीरिति, वज्रो वै स्वधिति,—र्वज्राद्वा अस्मा एतदन्तर्दधात्यहिंसायै, यो वा एतस्याभिहतस्याग्रे शकलः परापतति तमस्य तेजोऽन्वपक्रामति, यत्तं पुनराहरति सतेजस्त्वाय, प्राञ्चं प्रहापयति, मेधमेवैनमनुपर्यावर्तयति, वज्रो वै यूप,—स्तस्माद्वा इमे लोका नीयमानाद्बिभ्यती,—श्वरो ह्येषोऽशान्तो नीयमान इमांल्लोकान् हिंसितो,—र्यदाह, दिवमग्रेण मा हिंसीरन्तरिक्षं मध्येन पृथिव्याः संभव भ्राजं गच्छेति, शमयत्येवैनं, शान्त एनं नीयते, एषां लोकानामहिंसायै, सर्वस्य वा एष मित्रं यो दीक्षितः, स एतमहिंसी,—दीश्वरा वनस्पतयोऽपिधिष्ण्यं भवितो, यदाश्वेन जुहोति पुनरेवैनं प्रजनयति, तस्मादाश्चनाद्भूयांसः प्रजायन्ते, पशुना संमितः का३र्यो, दश वै पशोः प्राणा, आत्मैकादशो, ऽष्टाश्रयो ब्राह्मणी दशमे, आत्मैकादश,—स्तथा पशुना संमितो, ऽष्टाश्रिः कार्यो, गायत्र्या रूपं, गायत्रो हि यूपो, गायत्र्या वै पतन्त्या यत्र पर्णं परापतत्ततः पर्णोऽजायत, तस्मात् पर्णमयः, एतद् खलु वै पर्णस्य सारं यत्खदिर,—स्तस्मात् खादिर, इह वा असा आदित्य आसीत्, तमितोऽध्यमुं लोकमहरं,—स्तद्यतोऽध्यमुं लोकमहरं,—स्तस्माज्ज्योतिषो बिल्वोऽजायत, तस्माद्बैल्वो, ब्रह्मवर्चसकामेन कार्यो ब्रह्मवर्चसस्य समृद्ध्या, अथो ज्योतिष्येव तपस्तरती,—न्द्रो वै यतीन्त्सालावृकेयेभ्यः प्रायच्छत्, तेषां वा एकं ब्रह्मचारी चमसाध्वर्युरासी३त्, योऽयं हरिणस्तस्य यः सोमपीथ आसीत् स स्फ्यजोऽभवत्, तस्माद्धरिणः स्फ्यजं खादति, सोमपीथो ह्यस्यैष स, यत्र चमसं न्यौब्जत्ततो रोहितकोऽजायत, तस्माद्रौहीतक,—स्तस्माद्रौहीतके रौहितके स्फ्यजः, पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वे,—ति प्रोक्षत्ये,—षां वा एषां लोकानां विधृत्यै मीयते, त्रिः प्रोक्षति, त्रिषत्या हि देवा, अथो

---

[ ३ ] म १,२,१४ । तै ६,३,३ । कठ २६,४ । का ४१,२ । वा ६,१,१७,५,२६-२७,४२—४३,६,१-४,१५। ३७ ११,१,१७—१८ । काण्व. ४,२,२३,५,३३,३५—३६,५४,६,१—५,२७,११,१,१८—१९,२३,३३ ।

त्रिपदयैवैनं गायत्र्या प्रौक्षीद्, वज्रो वै यूपो, ऽन्नꣳ यवो, यद्यवमतीभिः प्रोक्षति वज्रेण वा एतदन्नं जयति, तेजो वै यूप, एषं खलु वा ओषधीनां तेजो यद्यव,—स्तस्मादुतꣳ शिशिरा ओषधयोऽनुप्राणन्ति, यद्यवमवास्यति तेजसि वा एतत्तेजो दधात्य,—क्षꣳ वा अमेध्यं,—मांसो हवि,—र्यदवसिञ्चति मेध्यमेवैनत्करोत्य,—क्षꣳ वा अमेध्यꣳ, यदवस्तृणाति मेध्यमेवैनत्करोति, तक्षितो वा एष नग्नो यच्चषालमवास्यत्य,—नग्नमेवैनमकः, स्वं एवैनꣳ स्थाने दधात्य,—वृक्ण एषाभूद्, घृतेन द्यावापृथिवी आपृणेति, घृतेनैव द्यावापृथिवी आपूरयति, - यजमानो वा अग्निष्ठस्तेजो घृतं,—मान्तमविच्छिन्नमनक्ति, यजमानमेव तेजसानक्ति, देवस्त्वा सविता मध्वानक्त्वित्याहै,—तद्धि देवानां मधु यद् घृतꣳ, सवितृप्रसूत एवैनं मध्वानक्ती,—न्द्रस्य चषालम-सीत्यै,—न्द्रꣳ हि चषालꣳ सुपिप्पला ओषधीस्कृधीत्या,—षधीरेव फलं ग्राहयति, तस्मादोष-धयः शीर्षन् फलं गृह्णन्ति, दिवमग्रेणोत्तभाना,—ऽन्तरिक्षं मध्येनापृण, पृथिवीमुपरेण दृꣳहेत्या,-—षाꣳ रेषां लोकानाꣳ विधृत्यै मीयते, ता ते धामान्युश्मसि गमध्या, इत्युपदधाति वैष्णव्या, वैष्णवो हि यूपः, स्वयैव देवतया, विष्णोः कर्माणि पश्यते,—ति संकल्पयति संमितत्वाय, ब्रह्मवनिं त्वा क्षत्रवनिं पर्यूहामी,—त्याशीर्वैषा, ब्रह्म दृꣳह क्षत्रं दृꣳहेत्या,—शिषु एवैष परिगृꣳहो, ऽपोऽनुपरिषिञ्चति धृत्यै ॥ ३ ॥ ३

वज्रो वै यूपो, यदन्तर्वेदि मिनुयान्निर्दहेद्, यद्बहिर्वेद्यनवरुद्धः स्या,—दर्धमन्तर्वेदि मिनो-त्य,—र्धं बहिर्वेद्य,—वरुद्धो ह भवति, न निर्दहति, नोपरस्याविः कर्तव्यं, यदुपरस्याविः कुर्याद्वेष्टाः स्याद्, प्रमायुको यजमानो, नातिस्थूलः कार्यः, क्षुधं प्रजा नीयु,—नो अस्त्यणु,—रुभयमेवान्तरा, यज्ञेन वै देवाः स्वर्गं लोकमायꣳ,—स्तेऽमन्यन्त,—ऽनेन नं नोऽन्ये लोकमन्वारोक्ष्यन्तीति, तꣳ यूपेनायोपयꣳ,—स्तद्यूपस्य यूपत्वꣳ, यद्यूपः पुरस्तान्मीयेत स्वर्गस्य लोकस्यानुख्यात्यै, तद्विष्णोः परमं पद,—मिति समुन्मार्ष्टि स्वर्गस्य लोकस्य समष्ट्यै, नाभिदघ्नं परिव्ययत्यू,—र्गा ओषधय, ऊर्जꣳ वा एतन्मध्यत आत्मनो धत्ते प्रजानां च, यदि कामयेत, क्षुधं प्रजा नीयुरित्य,—श्मनान्यूपान्मिनुयात्, क्षुधं प्रजा

---

[ ता ( या ) ते ( याँ ) धामान्यु ( वास्तु० )० । ऋ. १,१५४,६. तै. ब्रा. १,२,६,१; नि. २,७ ।
विष्णोः कर्माणि पश्यत० । ऋ. १,२२,१९; मा. ६,४; अथर्व. ७,२६,६, तै. सं. १,३,६ ॰ ]

[ ४ ] मै. १,२,१४ । तै. ६,३,४ । कठ. २६,६ कपि. ४१,४ । मा. ६,५ । ... ६,६ । [ तद्विष्णोः परमं पदं० । ऋ. १,२२,२०, मा. ६,५, अथर्व. ७,२६,७; तै. सं. १,३,६,१,४,१,९,३ ]

नियन्ति, यदि कामयेत, वर्षेत् पर्जन्य, ऊर्जं यजमानꣳ समर्धयेयमिति, परिवीय प्राचीमुदूहेद्, वृष्ट्या एवेमां न्यूहत्य,—ूर्जं यजमानꣳ समर्धयति, यदि कामयेत, न वर्षेत् पर्जन्य, ऊर्जं यजमानꣳ व्यर्धयेयमिति, परिवीय प्रतीचीमवोहेद्, वृष्ट्यैवेमां न्यूहत्य,—ूर्जं यजमानꣳ व्यर्धयति, सर्वदेवत्यो वै यूपो, यन्निखातं तत् पितृणाꣳ, यदूर्ध्वं तन्मनुष्याणाꣳ, यत्र रशनां तदोषधीनाꣳ, यदूर्ध्वꣳ रशनायास्तद्विश्वेषां देवाना,—मिन्द्रस्य चषालꣳ, ये वै देवाः साध्याः यज्ञमत्यमन्यन्त तेषाꣳ वा एतद्यदुपरिष्टाच्चषालस्याङ्गुलिमात्रं कार्य,—मङ्गुलिमात्रꣳ हि तदग्र आसीद्, यदतो वर्षीयः कुर्याद्वज्रो भूत्वा यजमानस्य पशूननुतिष्ठे,—दिन्द्रो वै वृत्राय वज्रमुदयच्छत्, सोऽम्लीयत, तस्य वा एतदनुनद्ध्यै यच्चषालं पृथुमात्रं कार्यं,— पृथुमात्रꣳ हि तदग्र आसीद्, यदभिमतोऽगृह्णात् तस्मादभिमता, यदिन्द्र उदयच्छत् तस्मादिन्द्रꣳ, यदि कामयेता,—ऽन्येऽस्य लोकमन्वारोहयेयुरित्य,—न्यस्य वृक्षस्य स्वरुं कुर्या,—दन्येऽस्य लोकमन्वारोहन्ति, यदि कामयेत, प्रजामनुसंतनुया,—दिति यूपस्य स्वरुं कुर्यात्, प्रजामेवानुसंतनोति, यजमानो वा अग्निष्ठो,—स्तेजोऽग्नि,—र्यदित्थꣳ वेत्थꣳ वा मिनुयाद्यजमानं तेजसा व्यर्धये,—दग्निना सहेतं मेतव्या यजमानस्य सतेजस्त्वाया,—ऽऽवृश्च ह स्म वै पुरा संस्थिते यज्ञेऽमुं यूपं प्रास्यन्ति, संभज्य स्रुचस्ते देवा अमन्यन्त, यज्ञवेशसमिदं कुर्या इति, तेऽब्रुवन्, परिधिभिरेव नः स्रुचः स्वगाकृताः सन्तु, स्वरुणा यूपः, प्रस्तरेण सदा इति, तेषाꣳ वा एषं स्वगाकारो, न ह स्म वै पुरा पुरुषं महादेवो हन्ति, तत् रुद्रꣳ रुद्रोऽन्ववातिष्ठत्, ये देवा एताꣳ रुद्रस्याशिषमपश्यꣳ,—स्त्रिः पुरस्तादनक्ति, त्रिरुपरिष्टात्, तत्षट्, षड्वा ऋतव, ऋतुभ्यो वा एतद्रुद्रमवयजत्या,—हुतिभाजो वा ऋतवोऽस्तोमभाज,—स्त एवास्यैतेनाभीष्टाः प्रीता भवन्ति, यद्यूपाज्जुहोति वनस्पतिभ्यस्तेनावयजति, यद्रशनाया ओषधीभ्यस्तेन, यदात्मनो मनुष्येभ्यस्तेन, यदाह, दिवं ते धूमो गच्छत्विति, हविर्धानात्तेना,—न्तरिक्षं ज्योतिरित्या,—ग्नीध्रात्तेन, पृथिवीं भस्म स्वाहेति, सदसस्तेन, सर्वतो वा एतद्रुद्रमवयजत्या,—हुत्या वा एतꣳ वनस्पतिभ्यः प्रच्यावयन्त्य,—वजुष मनुष्याः प्रयन्ति, तस्स्वाया देवताया अनपोधाय, यूपो वै यज्ञस्य दुरिष्टमामुञ्चन्, यंयप्रूयस्युपेयज्ञस्य दुरिष्टमामुञ्चेत्, तस्मात् तेन नोपस्पृश्यः, शुनां एव भीषते, न इश्वरोऽश्वान्त्वपातिशान्त्र मुचापिनिनो,—यदि यद्यः स्यात् ॥ एवं नु भावो ॥ इति ब्रूयाद्, यदि बह्वः ॥ एवं नु भावः ॥ इति ब्रूयाद्, सायुगाता वै संतनुपः, स्वांतेभ्यो देवताभ्योऽविषुबत्येषां लोकानामहि स्वापे, यथा वै यंगुꣳ

रज्जुभिर्व्युत्तमेवमिमे लोका यूपव्युता,—स्त एनमार्ति निनयन्ति, यदाह ॥ नमः स्वरुभ्यः ॥
इति, तेभ्य एव नमोऽक,—स्तेऽस्मै विजिहते, तेऽस्मै लोकꣳ विन्दन्त्ये,—तै वै देवानामृड-
यावा अस्मिँल्लोके सन्वाः स्वरवोऽभिरोद्धारो, यान्वै पश्यति ते सन्वा, अथ यान्पश्यति ते
यूहन्त ऊर्जा, यदाह ॥ नमः स्वरुभ्यो बृहद्भ्यो मारुतेभ्यः, सन्वान्मावगाम् ॥ इति तानेव
परिवृणक्त्ये,—ते वा अमुष्मिँल्लोकेऽन्नस्य प्रदातार,—स्तेऽस्मा अन्नं प्रयच्छन्ति ॥ अपश्चाद्दघ्वान्नं
४–१४
भूयासम् ॥ इत्यपश्चाद्दघ्वान्नं भवति ॥ ४ ॥

साध्या वै देवा आस,—न्नथ वै तर्हि नान्याहुतिरासीत्, ते देवा अग्निं मथित्वाग्नावजुहवु,—स्ते वै तयैवाहुत्या पशूंत्सृष्ट्वाथ पशुमालभन्त, यदग्निं मथित्वाग्नौ जुहोति तया वा एतदाहुत्या पशूंत्सृष्ट्वाथ पशुमालभन्ते, ऽथो पशवो वा एतदालब्धा यद्देवतां जनयन्त्य,—थो तेज एवास्मै जनयन्त्य,—ग्नेर्जनित्रमसीत्या,—यतनमिव एतत्क्रियते, वृषणौ स्थ इति, रेत एवैतद्दधाति, न हि तस्य रेतो धीयते यस्यैतौ न भवत, उर्वश्यसीति, वाग्वा उर्वशी, पुरूरवा असीति, प्राण एव तन्मिथुनं,—मायुरसी,—ति समनक्ति, तस्मिन्नेव मिथुने रेतो दधाति, गायत्रमसि, त्रिष्टुबसि, जगदसीति, छन्दोभिरेवैनं प्रजनयति, सावित्रीं प्रथमामन्वाह प्रसूत्यै, सवितृ-प्रसूता हि प्रजाः प्रजायन्ते, ऽथ द्यावापृथिवीया,—मपि हि द्यावापृथिव्योः पशुषु, द्यावा-पृथिवी हि पशवोऽनुप्रजायन्ते, गायत्रीरन्वाह, गायत्रो३ ह्यग्नि,—र्गायत्रं छन्दो, अपरिमिता अन्वाहा,—ऽपरिमिता ३ ह्यग्नेस्त ३न्वो, ऽग्निना वा अनीकेनेन्द्रो वृत्रमहꣳ,—स्तस्य समासृतस्य भीतस्य यत्र न्यार्प्यत ततो भूम्नोऽसृज्यत, तस्माद्भूमैवभृतो नानुव्या, व्युद्धा हि सा, रक्ष-सामनन्ववजयाय, परिधयः परिधीयन्ते, यत् समया परिधीन्प्रहरेत्तदनु रक्षाꣳसि यज्ञमनुजये-यु,—रग्रेण परिधयः प्रहृत्या रक्षसामनन्ववजयाय, क्रूरमिव वा एतद्यज्ञे क्रियते यदग्नावग्निं जुह्वति, यदाह, भवतं नः समनसौ समोकसौ सचेतसा अरेपसा इति, शमयत्येवैनं, शान्त एव प्रक्रियते यजमानस्याहिꣳसायै, स्रुवेणाभिजुहोति, संजग्मानाभ्यामेवाभ्यां भागधेय-मपिदधाति, यः कूटो वा कर्णो वा काणो वा शुष्को वाऽवर्तत तस्य यातयामा, स योऽपन्नद-न्मलं तत्पशूनां,—माग्नेयः पशु,—रग्निष्टोम आलभ्य, आग्नेयो ह्यग्निष्टोम, ऐन्द्राग्नः पशुरुक्थ्य आलभ्य, ऐन्द्राग्नानि ह्युक्थ्यान्यै,—न्द्रो वृष्णिः षोडशिन्यालभ्य ऐन्द्रो वै वृष्णि,—रैन्द्रः

[५] मै १,२,७। तै ६,३,५। कठ २६,७-८। कपि ४१,५। वा ५,२-३,१७,६०। काण्व ५,०-३,१३,६१।

षोडशी, सारस्वतीं मेष्यु,—तिरात्रे आलभ्या, वाग्वै सरस्वती, वागनुष्टु,—बानुष्टुभी रात्रि,—यज्ञक्रतूनामेवैषा व्यावृत्ति,—र्यथा वै मत्स्योऽविचितो जनमवधूनुत एवं वा एते प्रजायमाना जनमवधून्वते, यस्त्वा एतानेवं वेद तमेवैनावधून्वते, कथं सवनानि पशुमन्ति वेत्थे,—ति पृच्छेद्, यद्वपया प्रातःसवने चरन्ति तेन प्रातःसवनं पशुमद्, यत्पुरोडाशैर्माध्यंदिने सवने तेन माध्यंदिनं सवनं पशुमद्, यदङ्गैस्तृतीयसवने तेन तृतीयसवनं पशुमत्, किंयुता तत्पशोश्चरन्ति यद्वपया चरन्ति, किंयुता तद्यत्पुरोडाशैः, किंयुता तद्यदवदानै, रूपेण तत् पशोश्चरन्ति यद्वपया चरन्त्या,—त्मना तद्यत्पुरोडाशैः, शरीरेण तद्यदवदानैः, कस्मै पशुः प्रत्यङ् नियुज्यता, उदङ् प्रणीयते, दक्षिणत उपसाद्यते, प्राङ् हूयता, इति पृच्छेद्, यत् प्रत्यङ् नियुज्यत इमां तेन दिशमभिजयति, यद्दक्षिणत उपसाद्यत इमां तेन, यत्प्राङ् हूयत इमां तेन, यदुदङ् प्रणीयते मनुष्यलोकं तेनाभिजयति, यद्दक्षिणत उपसाद्यते पितृलोकं तेन, यत् प्राङ् हूयते देवलोकं तेन, यदाहुत्या ऊर्ध्वो धूम उदयते स्वर्गं तेन लोकं, यदिडोपहूतं प्रत्यङ् हरन्तीमं तेन लोकं, सर्वा वा इमा दिशः पशुनाऽभिजयति सर्वांल्लोका,—न्त्सर्वा एवास्येमा दिशोऽभिजिता भवन्ति सर्वे लोकाः ॥ ५ ॥ १५

अथैता आप्रियः, प्रजापतिः प्रजाः सृष्ट्वा रिरिचानोऽमन्यत, स एता आप्रीरपश्यत्, ताभिरात्मानमाप्रीणीत, यज्ञो वै प्रजापति,—र्यदेता आप्रियो भवन्ति यज्ञमेवैताभिर्यजमाना आप्रीणीते, वपया वै पशोर्देवाः प्रातःसवने स्वर्गं लोकमायन्, यद्वपया प्रातःसवने चरन्ति वपया वा एतत् पशोर्यजमानः प्रातःसवने स्वर्गं लोकमेति, ते वै स्वर्यन्तोऽस्थानि शरीराण्यधून्वत, यदङ्गैस्तृतीयसवने चरन्त्य,—स्थ्नां शरीराणां निष्क्रीत्यै, पशुं स्नपयन्ति, यदेवास्याभिनिपन्नं शमलममेध्यं तच् शुन्धन्ति, पशुमुपाकृत्याग्निं मन्थन्ति पशूनामवरुद्ध्यै, द्वौ वै वज्रो, घोरोऽन्यः, शिवोऽन्यो, यः शुष्कः स घोरो, य आर्द्रः स शिवो, वज्रेण खलु वै वीर्यं क्रियते, वज्रं वा एतदादत्ते वीर्याये,—पे त्वतो,—प एवैन,—मुपावीरसीत्यु,—प ह्येषोऽवत्यु,—पो देवान्दैवीर्विशः प्रागुरित्ये,—ता वै दैवीर्विशो यत् पशवो, वह्नय उशिजा इत्ये,—ते वै वह्नय उशिजो यदृत्विजश्च धिष्ण्याश्च, बृहस्पते धारया वसूनीति, ब्रह्म वै बृहस्पति,—र्ब्रह्मणैनान् यच्छति, हव्या ते स्वदन्तामिति, स्वदितमेवैनमालभते, देवत्वष्टर्वसु रण्वा इति, त्वष्टा हि रूपाणि विकरोति, रेवतीरमेध्यमिति, पशवो वै रेवती,—र्यद्रत्ये-

[ ६ ] मै. १,२,१५। तै ६,३,६,७,२—४। क.ठ. ३६,३। कपि ४१,६-७। वा ६,७-१०,४,२०। क.श्र ६,८-१२,४,३६।

यैनां, देवस्य त्वा सवितुः प्रसव इति, सवितृप्रसूत एवैनामादत्ते, ऽश्विनोर्बाहुभ्यामित्य,—श्विनौ वै देवानामध्वर्यू, पूष्णो हस्ताभ्या,—मिति देवताभिरेव, द्वौ वै पाशौ, घो३रोऽन्यः, शि३वोऽन्यो, यो यज्ञियः स घोरो, योऽयज्ञियः स शिवं, ऋतस्य त्वा देवहविः पाशेनेति, य एव यज्ञियः पाशस्तेनैनमालभते, प्रतिमुञ्चामीत्य,—पि हि मनु३ष्या दधत्य,—मुष्मै त्वा जुष्टमिति, यस्या एव देवतायै पशुरालभ्यते तस्या एनं जुष्टमक,—र्धर्षा मानुषा इति, मनु३ष्या हि धारयन्ति, शुष्को वा एषोऽमेध्यो, यत्पशुं नियुनक्त्युभा एवैनौ मेध्यौ करोति, प्रत्यञ्चं नियुनक्ति, प्रत्यञ्चो हि पशवो मेधमुपतिष्ठन्ते, प्राणेषु वा एतस्य देवता उपस्थिता यत्पशुं नियुनक्ति, प्रतीचीरेवास्मै देवता नियुनक्त्य,—द्भ्यस्त्वौषधीभ्य इत्य,—द्भ्यो ३ह्येष ओषधीभ्यो जुष्टं प्रोक्षामीति यस्या एव देवतायै पशुरालभ्यते तस्या एनं जुष्टमक,—रनु त्वा माता मन्यतामनु पितेत्य,—नुमत एवैनं मात्रा पित्रा भ्रात्रा सख्यालभते, ऽनुमानावह देवान् देवायते यजमानायेति, देवताभ्य एवैनं निदिशत्य,—पां पेरुरसीत्य,—पा२ ३ह्येष पेरुः, स्वात्त२ सद्धविरापो देवीः स्वदन्त्विति, स्वदितमेवैनमालभते, ऽथ यदुप गृह्णात्युप च सिञ्चति सर्वत एवैनं मेधेन समर्धयति, सं ते वायुर्वातेन गच्छतामिति, वातमेवास्य प्राणमन्ववार्छति, सं२ यजत्रैरङ्गानीति, याज्ञियमेवैनमकः, सं२ यज्ञपतिराशिषेति, यजमानमेव यज्ञस्याशिषा समर्धयति, शिरो वा आघार, आत्मा हवि,—र्यदाघारमाघार्य पशुना समनक्त्यात्मन्वा एतच्छिरो यज्ञस्य प्रतिदधाति, वज्रो वै स्वरु,—र्वज्रः स्वधिति,—र्यत्स्वधितिनानक्ति वज्रेणैवैन२ स्तृणुते, यात्ता तया गतस्यावद्यति, हविर्भूता वा एषा, हविष्येव हविषो-

ऽवद्यति ॥ ६ ॥ १६

अग्निना वै मुखेन देवा इमाँल्लोकानभ्यजयन्, यत्पर्यग्नि करोत्यग्निना वा एतन्मुखेन यजमान इमाँल्लोकानभिजयति, रक्षा२ंसि वा एवं जिघा२ंसन्ति, यत्पर्यग्नि करोति रक्षसामपहत्यै, त्रिः पर्यग्नि करोति, त्रयो वा इमे लोका, एभ्यो वा एतल्लोकेभ्यो यज्ञाद्रक्षा२ंस्यपहन्ति, चात्वालमपि पर्येत्य,—पां वा अग्नीना२ योनिः, स्कन्दति वा एतद्वीर्यं यद्विश्रोतति यद्विलिप्यते, ऽग्निर्वै सर्वा देवता, अत्र वै साऽपि देवता यस्या आलभ्यते, यत्पर्यग्नि करोति तामेवैनद्गम-यति, कियद्वाहैतत्पशोः, कियद्वा यत् प्रयाजा, एतर्हि खलु वै सर्वो यदा प्रीत,—स्तस्मादा-

[ देवस्य त्वा सवितु.० । अथर्व १९,५१,२ ]

[ ७ ] मै. १,२,१५ । तै ६,३,८ । वा ६,११ । काण्व ६,१३-१५ ।

श्राव्योऽपप्रेष्यति, देवताभ्यो वै पूर्वमाश्रुत्य,—दथ वा अत्र पशोराश्रावयति, तस्मादाश्रा-
व्योऽपप्रेष्यत्य,—मयि वा एतं वध्यमानमनुवध्यन्ते ये ग्राम्याः पशवो ये चारण्या, ये बध्यमा-
नमनु बध्यमाना अन्वेक्षन्त मनसे,—ति यज्जुहोति तेषाꣳ वा एषोन्मोक्षा; यन्न जुहुयादनुन्मुक्ताः
स्युरु३र्वन्तरिक्षꣳ ३वीहीत्य,—न्तरिक्षदेवत्यो वा एष एतर्हि, रक्षाꣳसि वा एतं जिघाꣳसन्ति,
प्रच्युतमितोऽप्राप्तममुत्रा,—ऽग्निं पुरस्ताद्धरन्ति रक्षसां पराणुत्त्यै रक्षसामपहत्या, अथो हव्याय वा
एतत् प्रणीयमानाय देवताः पुरस्ताद्धरन्त्य,—ग्निं पुरस्तान्निदधात्यस्कन्नत्वाय, पशोर्वै मारणा-
यानीयमानस्याहवनीयं मेध्योऽभ्युपक्रामति, यो वै तर्हि पशुमन्वारभते तꣳ यज्ञस्याशीर्गच्छति,
यदाह, रेवति प्रेधा यज्ञपतिमाविशेति, यत्र वा एतत् क्व च यजमानꣳ सन्तꣳ यज्ञस्याशीर्ग-
च्छति, वपाश्रपणीभ्यामन्वारभते, तदिस्वदुभयमक,—रुरो अन्तरिक्ष सजूर्देवेन वातेनेत्य,—
न्तरिक्षꣳ वै पशवो, वातः प्राणः, प्राणानस्मिन् दधाति, स्मनास्य हविषो यजेति,
देवता एव प्रीणाति, समस्य तन्वा भवेति, पुनरेवैनꣳ सम्भावयति, वर्षीयो वर्षीयसा इति,
तेन यजमानो वसीयान् भवति, यद्यज्ञे पशुमाहुर्यत्तमभिमन्यन्ते ३क्व तर्हि यज्ञो भवतीति,
यदाह, यज्ञꣳ यज्ञपतौ धा इति, यज्ञपतौ वा एतद्यज्ञं प्रतिष्ठाप्याथ पशुमालभन्ते, स्कन्दति
वा एतद्धविर्यद्विश्वोतति यद्विलिप्यते यत्तृणमुपास्यत्यस्कन्नत्वाय, प्रत्यञ्चꣳ संज्ञपयन्ति,
प्रत्यञ्चो हि पशवो मेधमुपतिष्ठन्त उदीचीनपादꣳ स्वगाकृत्यै ॥ ७ ॥ १७

ऋत्विजो वृणीते, छन्दाꣳसि वा ऋत्विज,—श्छन्दाꣳसि वा एतद्वृणीते, यद्धोतारꣳ वृणीते
जगतीं तद्वृणीते, यदध्वर्युं पङ्क्तिं तद्, यदग्नीधमतिच्छन्दसं तद्, यन्मैत्रावरुणं गायत्रीं तद्,
यद् ब्राह्मणाच्छꣳसिनं त्रिष्टुभं तद्, यत्पोतारमुष्णिहं तद्, यन्नेष्टारं ककुभं तद्, यदाह ॥ अग्नि-
र्दैवीनाꣳ विशां पुरएता ॥ इति, यजमानꣳ वा एतद्वृणीते, स वृतो वषट्करोति, नाछा-
वाकꣳ वृणीते, पश्चाज्जेत्र वा एषां, होत्राः स्व३र्ग्या, यदछावाकया द्विदेवत्याः शꣳसति,
द्विपा यजमानः प्रतिष्ठित्या, अथ यदग्नीधं मध्यतो वृणीते तस्मादयमग्निर्मध्यत ओषधीनाꣳ,
यदुत्तमः शꣳयजताꣳ शꣳयजति तस्मादुपरिष्टान्मथ्यमानः प्रजायत, एवं वा अस्य छन्दाꣳसि
वृतानि युक्तान्यभूवन्, यदवृता वषट्कुर्युर्भ्रातृव्यꣳ यज्ञस्याशीर्गच्छे,—दथ यद्वृता वषट्कुर्वन्त्ये-
कधा वा एतद्यजमाने यज्ञस्याशीः प्रतितिष्ठति, तस्मादेकः पशोर्वषट्करोत्ये,—कꣳ हि वृणुते,

(८) तै. ६,३,७,५। कठ. २६,९। कपि ४१,७।

दश वै पशोर्देवता, दशास्मिन् प्राणा, यद्दश प्रयाजा, या एवास्मिन् देवतास्ता एतद्यजत्य,—
थ य एष एकादशो, यस्या एवं देवतायै पशुरालभ्यते तामेवैतद्यजत्य,—थ यदेकादशानुयाजा,
या एवैतद्देवता अयाक्षीत् ता एतैरनुप्रीणाति, द्वयो वा एष मध्यतोऽमुत्र भूतो, दश वै पशो-
र्देवता, दशास्मिन् प्राणाः, प्राणाः खलु वै पशोर्देवता, यद्दश प्रयाजाः प्राणानेवास्य प्रयज-
त्या,—त्मा वै प्राणानामेकादश, आत्मा वपा पशो,—यदेष एकादशः परिशय आत्मा वा एत-
दात्मानं परिशये, ऽथ यदेकादशानुयाजाः प्राणानस्मिन् दधाति ॥ ८ ॥ १८ - २०
[१६७७]

॥ इत्युपरिकाण्डे संक्रान्ता नाम नवमः प्रपाठकः ॥ ९ ॥

---

अथ दशमः प्रपाठकः।

पत्नी वै प्रच्यवमानादमुष्यादित्यस्य लोकमभिप्रच्यवेत, हिनस्ति खलु वा एष तं यो ऽस्य
लोकमभिप्रच्यवते, यदाह, नमस्त आतानेत्य,—मुष्मा एवं नमो ऽक,—रनर्वा प्रेहीत्यनेनाः
प्रेही,—ति वा एतदाह यजमानाय, घृतस्य कुल्यामनु सह रायस्पोषेणेत्या,—शिषमेवाशास्त,
देवीरापः शुद्धा यूयं देवान् युयुध्वमित्य,—पो वा एतदुपयन्ति, पूताभिराभिः पूताश्चरन्ति,
तस्माद्धा एता बहु रिप्रममेध्यं चरन्तीमापो न हिंसन्ति, द्वयो वा एष मध्यतो ऽमुत्र भूतो,-
ऽद्भ्यो वै प्रजाः प्रजायन्ते, पत्नी प्रजनयति, यदद्भिरभिषिञ्चति पुनरेवैनं प्रजनयति,
पशोर्वै मार्यमाणस्य प्राणाञ्शुग्-
सर्ज्ञन् प्राणान्त्संमृशति सर्वाण्यङ्गान्ये,—तावान् हि पशुः, अद्भिर्वा अस्थितवद्
छाति, यदाह, वाचमस्य मा हिंसीः, प्राणमस्य मा हिंसीरित्य,—
प्राणाञ्शुचो मुञ्चति, यत्ते क्रूरं यदास्थितं तदेतेन शुन्धस्व, देवेभ्यः शुम्भस्वेति, यदेवास्य
गमयन्तः क्रूरमक्रंस्तदक्रूरमक,—स्तच्छमयति, ये वा एतं स्तोका अनुपद्यन्ते त इमाम-
शान्ता ऋच्छन्ति, तत इमाञ्छुगृच्छति, यदाह, शमद्भ्य इति, शमयत्येवं, शान्ता एवे-
मामृच्छन्त्यहिंसाया, ओषधे त्रायस्वैनमित्या,—ह त्रात्या एवं, स्वधिते मैनं हिंसीरिति,

[१] मै १,२,१६ । ते ६,३,८—९ । का ६,१७-१३,१५-१६,५,१०,१,१,२०,७,३०,१४,२२,१,७,२९,६,११;
२२,२८,३९,१३।कप ६,१४—१५,१९—२२,४,१४,१,१,३७,७,३०,१५,२०,१,१०,४६,२८,३३,३९,१७।

वज्रो वै स्वधिति,—र्वज्रादेवास्मा एतदन्तर्दधात्यहिꣳसायै, सर्वाभ्यो वै देवताभ्यः पशुराल-
भ्यते, यदाह, रक्षसां भागोऽसीत्ये,—र्स्वेन वा एतद्भागधेयेन रक्षाꣳसि पशोर्निर्भजती,—द-
महꣳ रक्षोऽवबाध, इदमहꣳ रक्षोऽधमं तमो नयामीत्या,—ह रक्षसां घराय रक्षसाम-
न्तरित्यै, पशवो वै वपा, यदुपतृन्द्यात् पशून् हिꣳस्याद्, यन्नोपतृन्द्यादयता स्यु,—र्यत्र
वेत्थिथ तदुपतृन्द्यात् पशूनां यत्या, इषे त्वोर्जे त्वेती,—ष ऊर्जो ह्येषा, देवेभ्यः शुन्धस्व,
देवेभ्यः शुम्भस्वेति, देवेभ्य एवैनाꣳ शुन्धति, देवेभ्यः शुम्भति, घृतेन द्यावापृथिवी
प्रोर्णुवाथामिति, घृतेनैव द्यावापृथिवी प्रोर्णोत्य,—च्छुष्मै त्वा जुष्टमिति, यस्या एव देवतायै
पशुरालभ्यते तस्या एनं जुष्टमक,—र्नमः सूर्यस्य संदृश इत्य,—मुष्मा एवं नमोऽक,—रित्थं
पर्यावर्तत, एवꣳ हि यज्ञः पर्यावर्तते, ऽथो अमुष्य वा एतदादित्यस्यावृतमनु पर्यावर्तत,
उरोरन्तरिक्षाꣳ वीहीत्य,—न्तरिक्षदेवत्यो वा एष एतर्हि, रक्षाꣳसि वा एतं जिघाꣳसन्ति,
गच्छतामितोऽमामुमनु, कार्ष्मर्यमयी वपाश्रपणी भवतो रक्षसामपहत्यै, यस्मा एवामुतोऽपि
पुरस्ताद्धरन्ति तस्मा इतो देवता वा एतद्रूपमनुपर्यावर्तमानमेति, चरमत उपप्रतिगृह्णात्यछम्ब-
ट्काराय, यदतिहरेद्दुर्वमेनातिहरेद्, विश्वतोमुखो ह्यग्निः, प्रत्युष्टꣳ रक्षः, प्रत्युष्टा अराति,-
—रित्याह रक्षसां घराय रक्षसामन्तरित्यै, वायोः स्तोकाना,—मिति तेनमुपास्यति
स्तोकानाꣳ विधृत्यै, वायुर्ह्येतानमुतो विसृजति प्रजानां क्लृप्त्या, अग्रꣳ वा एतद्रू-
पस्या,—ऽग्रमोषधीना,—मग्रेणाग्रꣳ समर्धयत्य,—थो अग्राय वा एतद्रूपस्याग्रमोषधीनामभि-
शिनोति, हविषो वा एते स्तोकाः, स्कन्दति वा एतद्धविर्यद्विश्चोतति यल्लिप्यते,
यदाह ॥

जुषस्व सप्रथस्तमꣳ वचो देवप्सरस्तमम् । हव्या जुह्वान आसनि ॥

इति वनस्पत्य ते हुता अस्कन्ना वषट्कृता भवन्ति, नानादेवत्या वा एकाद-
शिन्याः पशव आलभ्यन्ते, ऽथाग्नेयी प्रथमानूच्यते, ऽग्निर्वै सर्वा देवता, अन्नं वै सा पितृ-
देवता यस्या आलभ्यन्ते तामेवान्वभवयति, यर्हि लोहिनीव भवति तर्हि रौद्री, यर्चर्हि जुहुया-
द्रुद्रायास्य पशूनपिदध्याद्, यर्हि श्येनीव भवति तर्ह्याग्नेयी, तर्हि होतव्या, तथास्य
रुद्रः पशूननभिमानुको भवति, कृष्णꣳ वा एतर्हि पशुर्यदा शृतो, यद्वपामभिघार्य

[ जुषस्व सप्रथस्तम०  आसनि । ऋ. १,७५,१, तै. ब्रा ३,६,७,१ ]

पृषदाज्यमभिघारयेद्रुद्रायास्य पशूनपिदध्या,—दथ यत् पृषदाज्यमभिघार्य वपामभिघारयति यथा-
पूर्वं वा एतत् पशुमुपैत्य,—थो एवमस्य रुद्रः पशूननभिमानुको भवति, पुरस्तात्
स्वाहाकारा वा अन्ये देवा, उपरिष्टात् स्वाहाकारा अन्ये, तं उभयेऽस्ये मेध्येऽवरुध्यन्ते ॥
स्वाहा देवेभ्यः ॥ इति पुरस्ताद्वपाया जुहुयात् ॥ विश्वेभ्यो देवेभ्यः स्वाहा ॥ इत्युपरिष्टात्,
तथास्य तं उभयेऽवरुद्धा भवन्ति, पशोर्वै मार्यमाणस्य प्राणाञ्छुगृच्छति, प्राणान्त्संगृह्य वपा-
मुपविसृजे,—दात्मा वपा पशो,—रात्मन्नेवास्य प्राणान् दधाति, दक्षिणस्य पूर्वपदस्यावदेय,-
—मिति ह स्माहुर्दाक्षायणा,—स्तथास्य सर्वस्य पशोरवत्तं भवतीति, स्वाहोर्ध्वनभसं मारुतं देवं
गच्छत,—मिति वपाश्रपणी अनुप्रास्यत्य,—र्ध्वनभसो वा एतं मारुतस्य भागधेयं, तमेवैतेन
गमयती,—मे वा एते विषूची अनुप्रास्यत्य,—नयोर्विधृत्यै ॥ १ ॥ ३-७

पुरुषं वै देवा मेधायालभन्त, तस्य मेधोऽपाक्रामत्, सोऽश्वं प्राविशत् तेऽश्वमालभन्त,
तस्य मेधोऽपाक्रामत्, स गां प्राविशत्, ते गामालभन्त, तस्य मेधोऽपाक्रामत्,
सोऽविं प्राविशत्, तेऽविमालभन्त, तस्य मेधोऽपाक्रामत्, सोऽजं प्राविशत्, तेऽ-
जमालभन्त, तस्य मेधोऽपाक्रामत्, स यवं प्राविशत्, ते यवमालभन्त, तस्य मेधो-
ऽपाक्रामत्, स व्रीहिं प्राविशत्, ते व्रीहिमालभन्त, तं व्रीहा आप्नुवन्,
यद्व्रीहिमयः पुरोडाशो भवति मध्यतो वा एतत् पशोर्मेधो धीयते, सुषिरो वै तर्हि पशुर्यर्हि
वपामुत्खिदन्ति, यद्व्रीहिमयः पुरोडाशो भवत्यपिहित्या असुषिरत्वाय, द्वादशकपालो भवति,
द्वादश मासाः संवत्सरः, संवत्सरमनु पशवः प्रजायन्ते, प्रजननायैकादशकपालः कार्या,
एकादशाक्षरा त्रिष्टु,—बैन्द्रमेतच्छन्दो यत्त्रिष्टु,—बैन्द्राः पशवः, पशुष्वेवास्य पशून् दधाति,
देवा अन्योऽन्यस्मै पशुमालभं स्वर्गं लोकमाय,—स्तेऽमन्यन्ता,—ऽनेन वै नोऽन्ये लोकमन्वा-
रोक्ष्यन्तीति, तस्य मेधं प्राक्षारय,—न्त्स प्लक्षोऽभवत्, तत् प्लक्षस्य प्लक्षत्वं, क्रोशो वै तं
ह्वदयात् प्राक्षारयं,—स्तस्मादेतत् सुषिरं यत् प्लक्षशाखाया अवद्यति, मेधादेवाध्यवद्यति,
पृषदाज्यस्योपहत्य पृणाति ॥ शृतं हविः शमितः ॥ इति भूतत्वाय, विराड् विघृत्या हि देवा,
जघो यथेदं ब्राह्मणेभ्य ओदनं पक्वं प्राहैवं वा एतद्देवेभ्यो हविः शृतं प्राहो,—चरतः पर्यग्न्यभि-
घारयति पशूनामवरुद्ध्यै, प्राणापानौ वै पृषदाज्य,—मात्मा हृदयं, यत्पृषदाज्येन हृदयमभिघा-
मध्यतो वा एतत् पशोः प्राणापानौ दधाति, सोमस्य वा एतद्ध्रादिर्यद्धृदि,—रेत वा एतद्

[ २ ] ते ६.३.९–१०।

*

पशोर्यदुत्तरबर्हिर्बर्हिः, श्रद्धा एतद्धव्यमुक्,—रस्कन्नमविक्षुब्धं मे हव्यं देवता गच्छादिति, देवानां वै सर्वेषां मनाꣳसि गच्छति पशा आलभ्यमाने, मनो वै मनोता, यन्मनोताया अन्वाह मनाꣳस्येनेषाꣳ संभावयति, हतो वा एष मृतोऽमुत्र भूतो, मनो वै मनोता, यन्मनोताया अन्वाह पुनरेवेनꣳ संभावयति ॥ २ ॥ ८-१०

हृदयस्यावद्यति, मनस एव तेनावद्यत्य,—थो यावानेव पशुस्तस्यावत्तं भवति, जिह्वाया अवद्यति, वाच एव तेनावद्यत्य,—थो एतया ह्यग्रा ओषधीनाꣳ रसं ग्रश्नाति, श्येनस्यावद्यति, वक्षस एव तेनावद्यत्य,—थो अत्र हि स रसः प्रतितिष्ठति दोष्णोऽनुदाय पार्श्वयोरवद्यति यज्ञस्य परिगृहीत्यै, यक्नोऽवद्यति, मध्यस्यैव तेनावद्यति, मतस्नयोरवद्यति, रूपस्यैव तेनावद्यति, श्रोण्या अनुदाय गुदस्यावद्यति, तदुत्तमस्यावद्यत्यु,—त्तमꣳ ह्यायु,—र्यदन्यस्योत्तरस्यावद्येत प्राणमस्यापिदध्यात्, प्रमायुकः स्यात्, तस्मात्तस्योत्तमस्यावद्यत्यु,—त्तमꣳ ह्यायु,—र्हृदयस्यानुदाय जिह्वाया अवद्यति, यथापूर्वꣳ वा एतत् पशुमुपैत्य,—थो एवमस्य सर्वस्य पशोरवत्तं भवत्ये,—कादश कृत्वोऽवद्यति, दश वै पशोः प्राणा, आत्मैकादश,—स्तथास्य सर्वस्य पशोरवत्तं भवत्ये,—कादश वा एतान्यवदानानि, तानि द्विर्द्विरवद्यति, तद् द्वाविꣳशति,—स्त्रीणि त्र्यङ्गाणि, तत् पञ्चविꣳशतिः, पञ्चविꣳशेन वै स्तोमेन मनुः प्रजा असृजत, तन्मनुस्तोमो वा एष प्रजननाय,—तद्वै सर्वस्य पशोरवत्त,—मथ वै प्राणस्यापानस्य व्यानस्य तेषामवत्तꣳ, यत् त्र्यङ्गाणामवद्यति तेनैव प्राणस्यापानस्य व्यानस्य तेषामवत्तं भवति, विश्वरूपो वै त्वाष्ट्रः पशूनभ्यवमत्, तस्मात् पशवो विश्वरूपा, अभिवान्तो वै पशुः पृषित,—स्तस्मात् पृष्टीनां मज्जा नाद्यः, स वा अधस्तान्न प्राप्तो,—देतद्वै शीर्णं, तस्माद्देतोऽवद्यत्य,—क्ष्णयाङ्गानामवद्यति, पशुꣳ वा एतदोभयति, तस्मात् पशवोऽक्ष्णयाङ्गानि प्रहरन्तो यन्त्य,—भयो वै सर्वः पशु,—रथ वा उतान्यस्यै देवताया आलभ्यते, यद्दोष्णः पूर्वार्धादग्रेऽवद्यति गुदस्य मध्यतः श्रोण्या जघनतस्तथास्य सर्वस्य पशोरग्रेऽवत्तं भवति, त्रेधा गुदं करोति, त्रेधा ह्येतर्हि पशु,—रन्त्यङ्गाणि संभरन्त्यवदानानि, यावानेव पशुस्तस्मिन्नायुर्दधाति, त्रेधा मेदः करोति, मेदोरूपा हि पशवः, सर्वाणि वै पशोर्मेद्यतोऽङ्गानि मेद्यन्ति, यावानेव पशुस्तस्मिन् मेदो रूपं दधाति, यद्धैर्मेषा यज्ञागर्या,—ति ह स्माह यज्ञवचा राजस्तम्बायनः प्र वा इतो मनुष्याः पशुं च्यावयन्ति,

[३] तै ३,३,१०।

नामुत्र गच्छन्तीति, यद्धिरण्यमवधाय जुहोति हिरण्यज्योतिषमेवैन२ सुवर्गं लोकं गमयति ॥ ३ ॥
११

वसाहोमं प्रयौति, रस२ वा एतत् प्रयौति, स्वधितिना प्रयौत्ये,—तेन होतेरपामङ्गानामवद्यति,
तत्स्विदवदानमक,—रथो वज्रेणैवाहुतिमवरुन्द्धे, यूप एतयान्वित२ शमयत्यू,—गैं रसो यूरू,—
जी वा एतद्रसेन पशु२ समर्धयत्यं,—थो यावानेव पशुस्तस्मिन्त्सदधाति, पार्श्वेनापिदधात्यूर्जः
परिगृहीत्यै, हतो वा एष मृश्तोऽमुत्र भूतो, यत्पशु२ संमृशति पुनरेवैन२ संभावयति,
हव्यं पूर्वं देवता गमयित्वाथ शरीरमन्वारोहयितश्व्य,—मित्याहुर्यदाहुतीर्हुत्वा पशु२ संमृशति
हव्य२ वा एतत् पूर्वं देवता गमयित्वाथ शरीरमन्वारोहयत्य,—र्धस्रुचं जुहोती,—य२ वा अर्ध-
स्रुश्चो, ऽसा अर्धस्रुचो, ऽन्तरेमे अन्तरिक्ष,—मन्तरिक्षमिमाः प्रजाः, प्रजास्वेव रसं दधाति,
वनस्पति२ यजति, सोमो वै वनस्पतिः, सौमीरिमाः प्रजाः, प्रजास्वेव रसं दधाति, प्राणा-
पानौ वै पृषदाज्य,—मात्मा हवि,—र्यत्पृषदाज्यं जुहोत्यात्मन्वा एतत् पशोः प्राणापानौ दधाति,
दिग्भ्यो जुहोती,—मा एव दिशो रसेन व्युनक्ति, प्राचीमुत्तमां जुहोति, प्राचीमेव दिशं पुनरुपा-
वर्तन्ते, ऽध्यूध्नी२ होत्रे हरन्ति, वैश्वदेवो वै होता, वैश्वदेवीरिमाः प्रजा, ऊधः खलु वै
प्रजा अनूपजीवन्ति, सर्वा एवैनाः पयस्विनीः करोति, गुदेनोपयजति, प्राणो वै गुदः,
प्राणादधि प्रजाः प्रजायन्ते प्रजननाय, स्थविमत उपयजति, स्थविमतो हि प्रजाः प्रजायन्ते,
यदणिमत उपयजेत् प्रजननमपिहन्यात्, तस्मात् स्थविमत उपयजत्य,—संभिन्दन्नुपयजति प्राणा-
नामसंभेदाय, यत्संभिन्द्यात् प्राणान्त्संभिन्द्याद्, यं द्विष्यात्तस्य संभिन्द्यात्, प्राणानस्य
संभिनत्ति, नोपयज्य२, यदुपयजेत् प्राणानुपयजेत्, प्रमायुकः स्यात्, तदाहु,—रुपयज्यु-
मेव, प्रजनन२ वा उपयजो, ऽपि ह स प्रजायते य उपयजतीत्याभारद्वाजे,—ति ह स्माह
शुचिवृक्षो गौपालायनः, किं तर्हि प्रजा आसन्यर्हि यज्ञो नानोपयद्भिरासी,—न्न प्रजाः प्राजा-
यन्त, नौषधयः फलमगृह्णन्, यदा वाव यज्ञ उपयद्भिः समभवदथ प्रजाः प्राजायन्ता,—ऽथौ-
षधयः फलमगृह्ण,—न्नेकादश प्रयाजा, एकादशानुयाजा, एकादशोपयज,—स्तत्त्रयस्त्रि२शत्,
त्रयस्त्रि२शद्देवता,—स्ता एवास्यैताभिरभीष्टाः प्रीता भवन्त्ये,—तद्वा अस्य पशोरनवाभिष्टोऽन-
भीष्टोऽभूद्, यास्य मात्रा तामेनं गमयति, स्तरग्यो वै सर्वः पशु,—र्यदन्यत्राहवनीयाज्जुहु-

[ ४ ] मै. १,२,१७। तै ६,३,११।

यदस्वर्ग्यः स्यात्, पशुश्रपणादग्निमाहरन्ति तेन स्वर्ग्यः सर्वः पशु,—र्यत एवं पूर्वमवदात्तत्तोऽ-परमवद्यति, तस्मात् समानायोनेर्नानारूपाः पशवः प्रजायन्ते, यज्ञो वै देवानामत्यपने,—त्तं देवा उपयड्भिरप्यवपन्ननतिनेदाय, यदेता उपयजो भवन्ति यज्ञमेवैताभिरपिवपन्त्यनतिनेदाय, यथा वै पुरुषः प्रत्यङ् छिद्र एवं यज्ञः प्रत्यङ् छिद्रं,—स्तं देवा उपयड्भिरप्यदधुरछिद्रत्वाय, यदेता उपयजो भवन्ति यज्ञमेवैताभिरपिदधात्यछिद्रत्वाय ॥ ४ ॥ १२

यं कंचावाचीनमेकादशिन्याः पशूनस्तानुत्तरमर्धं यूपस्य नियुञ्ज्याद्, रौद्रा वै पशवो, ऽग्निरधिपति,—र्दक्षिणे हविर्धाने सोममासादयन्ति, तथास्य रुद्रः पशूननभिमानुको भवति, पात्रेषु वा अहमध्वर्युं चानध्वर्युं च विजानामी,—ति ह स्माहारुणिरौपवेशिः, कति पात्राणी,—ति पृच्छेद्, द्वादश पात्राण्य,—पांशुसवनस्त्रयोदशं, यत्तन्मीमांसन्ते, पात्रा३म-पात्रा३मिति, मीमांसन्ते हि त्रयोदशं मांसं, मांसा३मं मांसा इति, पञ्च प्रातःसवने पुरोडाशा,—श्चत्वारो माध्यंदिने सवने, चत्वारस्तृतीयसवने, इमां वा एतां निरमिमीत प्रजापति,—रात्मन एव, यत्तु एवैतां निरमिमीत तदेनैरपिधीयते, देवाश्च वा असुराश्चास्पर्ध-न्ता,—ऽऽयतनवन्तोऽसुरा आस,—न्ननायतना देवा, इमे लोका असुराणामायतनमास,—न्ते देवाः संस्तम्भं संस्तम्भं पराजयन्ता,—ऽनायतना ह्यास,—न्ते वै सवनान्येवायतनमचाय,—न्तानि प्राविश,—न्तानि नाध्रियन्त, तं वै पुरोडाशानेव सवनानामायतनमचाय,—न्ता-न्निरवपं,—स्तान्यध्रियन्त, ततो देवा अभवन्, परासुरास्त्व,—य एवं वेदायतनवान् भवति, भवत्यात्मना, परास्य भ्रातृव्यो भवति, तस्मादनुसवनं पुरोडाशा निरुप्याः सवनानां धृत्यै, तस्मादनुसवनं पुरोडाशः प्राश्यः सोमपीथस्य धृत्यै, घृतं वै देवा वज्रं कृत्वा सोममघ्न,—न्नभि खलु वा एतं घारयन्ति, यत् प्राश्नीयात् सोमपीथं हन्याद्, यन्न प्राश्नीयात् सोमपीथेन व्यृध्येत, यत्रानभिघृतं तत् प्राश्यः सोमपीथस्य धृत्यै, तद्धृत्यं, प्राश्य एवे,—न्द्रो वै वृत्रमहं,—स्तं न किं चनाधिनोत्, तं पुरोडाश एवाधिनोत्, तस्मात् पुरोडाशः प्राश्यः सोमपीथस्य धृत्यै, पञ्च प्रातःसवने पुरोडाशाः, पुरोडाशः परिवापो धानाः करम्भः पयस्या, सा पुरोडाशपङ्क्ति,—र्द्विनाराशंसाः प्रातःसवने,

---

[५] कठ २९,१। का १९,२१। कपि २१,२१।

द्विनाराश्ःसा मा॒ध्यंदिने सवना, एकनाराश्ःसास्तृतीयसवने, सा नराश्ःसपङ्क्ति,—स्त्रीणि सवनान्यत्रभूथो, ऽनुव॒न्ध्या सवनाना पञ्चमी, सा सवनपङ्क्ति,—रेषा वै पङ्क्तिर्यामा-र्भ्युद्भिन्नादिनो, वेथ ता पङ्क्ति॒ यया न स्तुवते न शस्सन्त्य,—थ यज्ञ॒ वहन्त्य,—थ यज्ञ॒
१३
स॒स्थापयन्ता इति ॥ ५ ॥

देवाश्च वा असुराश्चास्पर्धन्त, तेषा॒ वा इन्द्रियाणि वीर्याण्यपाक्राम,—न्नृक्सामे वा एभ्य-स्तदपाक्रामता, पशवो वागिन्द्रियं प्राणापानौ, तेनी इन्द्रोऽकामयत, सायुज्य गछेयमिति॥ हरिं इन्द्रो धाना अत्तु ॥ इत्यृक्सामे वा इन्द्रस्य हरी, ऋक्सामाभ्यामेव सायुज्यमगछत् ॥ पूषण्वान्करम्भः ॥ इति, पशवो वै पूषा, पशुभिरेव सायुज्यमगछत् ॥ सरस्वतीवान् भारती-वान् परिवापः॥ इति, वाग्वै सरस्वती, वाचैव सायुज्यमगछत्॥ इन्द्रस्यापूपः॥ इतीन्द्रियं॒ वा इन्द्र, इन्द्रियेणैव सायुज्यमगछत् ॥ मित्रावरुणयोः पयस्या ॥ इति प्राणापानौ वै मित्रावरुणौ, प्राणापानाभ्यामेव सायुज्यमगछन्, ततो देवा अभवन्, परासुरा,—स्तथ एव॒ वेदैतैरेवेन्द्रि-येर्वीर्यरतैर्मैहविर्भिः सायुज्यं गछति, भवत्यात्मना, परास्य भ्रातृव्यो भवति, दीर्घजिह्वी वै देवानां प्रातःसवनमवालेद्, तदमाद्यत्, सा पयस्याभवत्, तस्मात् पय॒स्या विमदित-रूपेव मैत्रावरुणी प्रातःसवने स्यात्, प्राणापानौ वै मित्रावरुणौ, प्राणापानौ वा एतन्मुखतो यज्ञस्य धीयेते, न गुदः पर्याकर्तवै, यद्गुदं पर्याकुर्यादुदावर्तः प्रजा हन्याद्रक्षसामनन्ववजयाय, यूपः पुरस्तान्मीयते, यदग्रेण यूपं पशु॒ हरेयुस्तदनु रक्षा॒सि यज्ञमवजयेयु,—रन्तराग्निं च यूपं
१४-२४
च हरत्यो रक्षसामनन्ववजयाय ॥ ६ ॥

समुद्रं गछ स्वाहेत्यु,—पस्थ॒ वा एतद्यजत्य,—न्तरिक्ष गछ स्वाहेति, रेत एवैतद्दधाति, देव॒ सवितारं गछ स्वाहेत्या,—ह प्रसूत्या एवा,—ऽहोरात्रे गछ स्वाहेत्य,—होरात्रे ह्यनु प्रजाः प्रजायन्ते, मित्रावरुणौ गछ स्वाहेति, प्राणापानौ वै मित्रावरुणौ, प्राणापानावेवासु दधाति, द्यावापृथिवी गछ स्वाहेत्याभ्यामेवैनाः सृष्टाः परिगृह्णाति, छन्दा॒सि गछ स्वाहेति, वाग्वै छन्दा॒सि, वाचमेवासु दधाति, सोमं गछ स्वाहेत्य,—न्न॒ वै सोमो, ऽन्नमेवासु दधाति, यज्ञं गछ स्वाहेति, यज्ञिया एवैना अक,—र्दिव्यं नभो गछ स्वाहेति,

[ ६ ] काठ २९ १—२।
[ ७ ] मै १२,१८। तै ६,४ १। का ६ २१। कप्व ६,२८—२९।

वृष्टिमेवाभ्यो निनयन्त्य,—ग्निं वैश्वानरं गच्छ स्वाहेति, संवत्सरो वा अग्निर्वैश्वानरः,
संवत्सरं एवैनाः प्रतिष्ठापयति, संवत्सरायुषमेनाः करोति, मनो हार्दिं यच्छे,—त्याह
प्राणानां गोपीथायै,—षधीभ्यस्त्वेत्यो,—षधीष्वेव रसं दधाति, यो वै विद्वान् वाविद्वान् वोप-
यज्ञो मिथुनयोप यजति प्राणान् वा एतन्मिथुनयाकुरुते, यदाह, मनो हार्दिं यच्छेति,
प्राणान् वा एतदृतुशः कल्पयते, पशुर्वा आलब्धः शोचति, तस्य मध्यं शुगभिसमेति,
सा हृदयेप्वागच्छति, यत् पुरुषमुपस्पृशेन्मनुष्यान्शुगृच्छेद्, यद्गामुपस्पृशेत् पशून्शुगृच्छेद्,
यद्वृक्षमुपस्पृशेद्वनस्पतीं शुगृच्छेद्, यत्तृणमुपस्पृशेदोषधीः शुगृच्छेद्, यदुदकमुपस्पृशेदपः शुगृच्छेद्,
यदार्द्रमनुदकं तच् शान्तं, तत्रोपोप्यं, तद्देवताः शुचमवयजति ॥ ७ ॥ २५

[ १६५१ ]

॥ इत्युपरिकाण्डे पात्नीवन्ता नाम दशमः प्रपाठकः ॥ १० ॥

अथैकादशः प्रपाठकः ।

## सौत्रामणी ।

समिद्धा इन्द्र उपसामनीके पुरोरुचा पूर्वकृद्वावृधानः ।
त्रिभिर्देवैस्त्रिंशता वज्रबाहुर्जघान वृत्रं वि दुरो ववार ॥ १
नराशंसः प्रति शूरो मिमानस्तनूनपात्प्रति यज्ञस्य धाम ।
गोभिर्वपावान्मधुना समञ्जन् हिरण्यैश्चन्द्री यजति प्रचेताः ॥ २
ईडितो देवैर्हरिवां अभिष्टिराजुह्वानो हविषा शर्धमानः ।
पुरंदरो गोत्रभिद्वज्रबाहुरायातु यज्ञमुप नो जुषाणः ॥ ३
जुषाणो बर्हिर्हरिवान्न इन्द्रः प्राचीनं सीदात् प्रदिशा पृथिव्याः ।
उरुप्रथाः प्रथमानं स्योनमादित्यैरक्तं वसुभिः सजोषाः ॥ ४
इन्द्रं दुरः कवष्यो धावमाना वृषाणं यन्ति जनयः सुपत्नीः ।
द्वारो देवीरभितो विश्रयन्तां सुवीरा वीरं प्रथमाना महोभिः ॥ ५

१ ] काठ. ३८,६ । तै. ब्रा. २,६,८ । वा. २०,३६—४३ । ऋग्. ११,११—३१ ।

उषासानक्ता बृहती बृहन्तं पयस्वती सुदुघे शूरमिन्द्रम् ।
पेशस्वती तन्तुना सꣳवयन्ती देवानां देवꣳ यजतः सुरुक्मे ॥ ६

दैव्या मिमाना मनसा पुरुत्रा होतारा इन्द्रं प्रथमा सुवाचा ।
मूर्धन्यज्ञस्य मधुना दधाना प्राचीनं ज्योतिर्हविषा वृधातः ॥ ७

तिस्रो देवीर्हविषा वर्धमाना इन्द्रं जुषाणा वृषणं न पत्नीः ।
अच्छिन्नं तन्तुं पयसा सरस्वतीडा देवी भारती विश्वतूर्तिः ॥ ८

त्वष्टा दधदिन्द्राय शुष्ममपाकोऽचिष्टुर्यशसे पुरूणि ।
वृषा यजन्वृषणं भूरिरेता मूर्धन्यज्ञस्य समनक्तु देवान् ॥ ९
वनस्पतिरवसृष्टो न पाशैस्त्मन्या समञ्जञ्छमिता न देवः ।
इन्द्रस्य हव्यैर्जठरं पृणानः स्वदातु हव्यं मधुना घृतेन ॥ १०

स्तोकानामिन्दुं प्रति शूर इन्द्रो वृषायमाणो वृषभस्तुराषाट् ।
घृतप्रुषा मनसा हव्यमुन्दन्त्स्वाहाकृतं जुषताꣳ हव्यमिन्द्रः ॥ १ ॥ ११

होता यक्षत्समिधाग्निमिडस्प३देऽश्विनेन्द्रꣳ सरस्वतीमजो धूम्रो न गोधूमैः कुवलैर्भेषजं मधुशष्पैर्न तेज इन्द्रियं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज, होता यक्षत्तनूनपात्सरस्वतीमविर्मेषो न भेषजं पथा मधुमदाभरन्नश्विनेन्द्राय वी३र्यं बदरैरुपवाकाभिर्भेषजं तोक्मभिः पयः सोमः परिस्रुता घृतं मधु वेत्वाज्यस्य होतर्यज, होता यक्षन्नराशꣳसं न नग्नहुं पतिꣳ सुराया भेषजं मेषः सरस्वती भिषग्रथो न च३न्द्र्यश्विनोर्वपा इन्द्रस्य वी३र्यं बदरैरुपवाकाभिर्भेषजं तोक्मभिः पयः सोमः परिस्रुता घृतं मधु वेत्वाज्यस्य होतर्यज, होता यक्षदिडेडित आजुह्वानः सरस्वतीमिन्द्रं बलेन वर्धयन्नृषभेण गवेन्द्रियमश्विनेन्द्राय भेषजꣳ यवैः कर्कन्धुभिर्मधु लाजैर्न मासरं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज, होता यक्षद्बर्हिरूर्णम्रदा भिषङ्नासत्या भिषजाश्विनाश्वा शिशुमती भिषग्धेनुः सरस्वती भिषगिन्द्राय दुह इन्द्रियं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज, होता यक्षद्दुरो दिशः कव३ष्यो न व्यचस्वतीरश्विभ्यां न दुरो दिश इन्द्रो न रोदसी दुघे दुहे धेनुः सरस्वती शुक्रं न ज्योतिरिन्द्रियं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज, होता यक्षत्सुपेशसोषे नक्तं दिवाश्विना संजानाने सुपेशसा सम-

[ २ ] तै. ब्रा. २,६,११ । वा २१,२९—३९ । काण्व २३,३०—४० ।

वैराजे सामन्नधि मे मनीषानुष्टुभा संभृतꣳ वीर्यꣳ सहः ।
इदं क्षत्रं मित्रवदार्द्रदानु मित्रावरुणा रक्षतमाधिपत्यैः ॥ ५७
सम्राड् दिशाꣳ सहसाम्नी सहस्वत्यृतुर्हेमन्तो विधया नः पिपर्तु ।
अवस्युवाता बृहती नु शक्वरी दिशां त्वेष्युवतु नो घृताची ॥ ५८
स्वर्वती सुदुघा नः पयस्वतीमꣳ यज्ञमवतु या घृताची ।
त्वं गोपाः पुरएतोत पश्चाद्बृहस्पते याम्याꣳ युङ्ग्धि वाचम् ॥ ५९
ऊर्ध्वा दिशाꣳ रन्तिराशौषधीनाꣳ संवत्सरेण सविता नो अह्ना ।
रेवत्सामातिछन्दा उ छन्दोऽजातशत्रुः स्योना नो अस्तु ॥ ६०
स्तोममस्त्रयस्त्रिꣳशे भुवनस्य पत्नी विवस्वद्वाते अभि नो गृणीहि ।
घृतवती सवितुराधिपत्ये पयस्वती रन्तिराशा नो अस्तु ॥ ६१
अन्वद्य नो अनुमतिर्यज्ञं देवेषु मन्यताम् । अग्निश्च हव्यवाहनो भवतं दाशुषे मयः ॥ ६२
अन्विदनुमते त्वं मन्यासै शं च नस्कृधि ।
क्रत्वे दक्षाय नो हिनु प्र ण आयूꣳषि तारिषत् ॥ ६३
वैश्वानरो न ऊत्या प्रयातु परावतः । अग्निरुक्थेन वाहसा ॥ ६४
पृष्टो दिवि ॥ ६५
ध्रुवा दिशाꣳ विष्णुपत्न्यघोरास्येशाना सहसो या मनोता ।
बृहस्पतिर्मातरिश्वोत वायुः संध्वाना वाता अभि नो गृणन्तु ॥ ६६
विष्टम्भो दिवो धरुणः पृथिव्या अस्येशाना जगतो विष्णुपत्नी ।
व्यचस्वतीषयन्ती सुभूतिः शिवा नो अस्त्वदितिरुपस्थे ॥ ६७
कया नः ॥ ६८
को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् ।
आसन्निषून् हृत्स्वसो मयोभून् य एषां भृत्यामृणधत् स जीवात् ॥ ४ ॥ ६९

[ अन्वद्य ( अनु ) नो अनु० ( ०द्यानु० ) । ऋ. परि ३.३, अथर्व. ७,२०,१ । अन्विदनुमते त्वं० । ऋ परि ३,४, अथर्व. ■ २०,२ । वैश्वानरो न ऊत्या० । अथर्व ६,३५,१; आ. श्रौ. सू .२,११ । पृष्टो दिवि पृष्टो० । ऋ. १,९८,२; सं ■ ६,५,११,१. तै ब्रा. ३,११,६,४। विष्टम्भो दिवो धरुणा( ०णः)० । ऋ ९,८९,६ । कया न ० । ऋ ४,३१,१; सा. १६९,६८२; अथर्व. २०,१२४,१; तै. सं. ४,२,११,२, तै. आ. ४,४२,३। को अद्य युङ्क्ते० । ऋ १,८४,१६, सा ३४१; अथर्व १८,१,६, तै. सं. ४,२,११,३; नि. १४,२५]

अग्नेर्मन्वे प्रथमस्यामृतानाꣳ यं पाञ्चजन्यं बहवः समिन्धते ।
विश्वस्यांꣳ विशि प्रविविशिवांꣳसमीमहे स नो मुञ्चत्वꣳहसः ॥ ७०
यस्येदं प्राणन्निमिषद्यदेजति यस्य जातं जनमानं च केवलम् ।
स्तौम्यग्निं नाथितो जोहवीमि स नो मुञ्चत्वꣳहसः ॥ ७१
इन्द्रस्य मन्वे प्रथमस्य प्रचेतसो वृत्रघ्नः स्तोमा उप मामुपागुः ।
यो दाशुषः सुकृतो हवमुप गन्ता स नो मुञ्चत्वꣳहसः ॥ ७२
यः संग्रामं नयति सꣳ वशी युधे यः पुष्टानि सꣳसृजति त्रयाणि ।
स्तौमीन्द्रं नाथितो जोहवीमि स नो मुञ्चत्वꣳहसः ॥ ७३
मन्वे वां मित्रावरुणा तस्य वित्तꣳ सत्यौजसा दृꣳहणा यं नुदेथे ।
या राजाना सरथꣳ यात उग्रा ता नो मुञ्चतमागसः ॥ ७४
यो वाꣳ रथ ऋजुरश्मिः सत्यधर्मा मिथुश्चरन्तमुपयाति दूषयन् ।
स्तौमि मित्रावरुणौ नाथितो जोहवीमि ता नो मुञ्चतमागसः ॥ ७५
वायोः सवितुर्विदथानि मन्महे या आत्मन्वद्बिभृतो यौ च रक्षतः ।
यौ विश्वस्य परिभू बभूवथुस्ता नो मुञ्चतमागसः ॥ ७६
उप श्रेष्ठा न आशिषो देवयोर्धर्मा अस्थिरन् ।
स्तौमि वायुꣳ सवितारं नाथितो जोहवीमि ता नो मुञ्चतमागसः ॥ ७७
रथीतमौ रथीनामह्व ऊतये शुभं गमिष्ठौ सुयमेभिरश्वैः ।
ययोर्वां देवौ देवेष्वनिशितमोजस्ता नो मुञ्चतमागसः ॥ ७८
यदयातꣳ वहतुꣳ सूर्यायास्त्रिचक्रेण सꣳसदमिच्छमानौ ।
स्तौमि देवा अश्विनौ नाथितो जोहवीमि वा नो मुञ्चतमागसः ॥ ७९
मरुतां मन्वे अधि नो ब्रुवन्तु प्रेमाꣳ वाचꣳ विश्वामवन्तु विश्वे ।
आशून् हुवे सुयमानूतये ते नो मुञ्चन्त्वेनसः ॥ ८०

---

[ ५ ] तै. ४,७,१५। काठ. २२,१५। वा. १२,२३,३४,८—१;१८,७२;२६,८। काण्व १३,२४,३३,८;२०,४१,२८,८।
[ अग्नेर्मन्वे प्रथमस्या० । ४,२३,१ । यस्येदं प्राणन्निमि० । अथर्व. ४,२३,७ । इन्द्रस्य मन्वे० । अथर्व.४,२४,१। यः संग्रामं नयति० । अथर्व. ४,२४,७ । मन्वे वां मित्रावरुणा० । अथर्व. ४,२९,१—२ । यो वाꣳ (ययोः) रथ ऋजु० ( सत्य० ) । अथर्व ४,२९,७ । वायोः सवितुर्विदथानि० । अथर्व. ४,२५,१ । उप श्रेष्ठा न० । अथर्व ४,२५,७ । रथीतमौ ( प्र सुमतिं ) रथीना० । अथर्व. ४,२५,६ । स्तौमि देवा ( भवाशर्वौ ) ० । अथर्व ४,२८,७ । मरुतां ( देवानां ) मन्वे० अथर्व ४,२७,१ ]

# अथ चतुर्थं काण्डम् ।

अथ प्रथमः प्रपाठकः ।

## पुरोडाशब्राह्मणम् ।

वनस्पतीन्वा उग्रो देव उदैषत्, तं शम्या अध्यशमयं,—स्तच्च शम्याः शमीत्वं, यच्च
शमीशाखया वत्सानुपाकरोति शान्त्यै, पर्णवती कार्या, पशूनां वा एतद्रूपं, पशुमान् भवति,
यद्वपर्णी स्याद्दण्डस्य तद्रूपं, वज्रो दण्डो, वज्रेण पशूनभिप्रवर्तयेत्, तृतीयस्यां वै दिवि
सोम आसीत्, तं गायत्री श्येनो भूत्वाहरत्, तस्य पर्णमछिद्यत, ततः पर्णोऽजायत, तत्
पर्णस्य पर्णत्वं, तस्मात् सर्वेऽन्ये वनस्पतयः पर्णिनो, ऽथैषं पर्ण उच्यते, यत् पर्णशाखया
वत्सानुपाकरोति तमेव सोममवरुन्द्धे, देवा वै ब्रह्म समवदन्त, तत् पर्ण उपाशृणोत्, सुश्रवा
वै नामैषं, न बधिरो भवति य एवं वेद, ब्रह्म वै पर्णो, यत् पर्णशाखया प्रार्पयति ब्रह्म-
णैवैनाः प्रार्पयती,—षे त्वं,—तीषमूर्जं यज्ञे च यज्ञपतौ चाधाद्, वायवः स्थेति, वायुर्वा
अन्तरिक्षस्याध्यक्षो, ऽन्तरिक्षदेवत्याः पशवो, वायुरेवैनानन्तरिक्षाय परिददाति, प्र वा एना-
नेतदाकरोति, यद्वायवः स्थेत्याहा,—ऽरण्यस्येव हि वायु,—र्देवो वः सविता प्रार्पयत्विति,
सवितृप्रसूत एवैनाः प्रार्पयति, श्रेष्ठतमाय कर्मण इति, यज्ञो वै श्रेष्ठतमो, यज्ञायैवैनाः प्रा-
र्पयत्या,—प्यायध्वमघ्न्या देवेभ्य इति, वत्सेभ्यश्च वा एता मनुष्येभ्यश्च पुराप्यायन्ते, ऽथै-
तर्हि देवेभ्य एवैना आप्यायति, मा वः स्तेन ईशत माघशंस इत्या,—शिषमेवाशास्ते, १
ध्रुवा अस्मिन् गोपतौ स्यात बह्वीरिति, प्रैवं जनयति ॥ २
शुद्धा अपः सुप्रपाणे पिबन्तीः ॥ ३
इति पुनात्येवैनाः ॥ ४
रुद्रस्य हेतिः परि वो वृणक्तु ॥
इति रुद्रादेवैनास्त्रायन्ते ॥ पूषा वः परस्पा अदितिः प्रेत्वरीया इन्द्रो वोऽध्यक्षोऽनष्टाः पुनरेत ॥
इति त्रयो वा इमे लोका, एभ्य एवैना लोकेभ्यः पुनरावर्तयति, यजमानस्य पशून् पाही,—
ति यजमानस्यैव पशूनां गोपीथायाहिंसायै ॥ प्रतीचीं शाखामुपगूहति तस्माद्ग्राम्याः पशवः ५–८
सायमरण्याद्ग्राममायन्ति, प्रत्यञ्च एनं पशवो भवन्ति य एवं वेद ॥ १ ॥

[ १ ] मै. १,१,१, । तै. ब्रा ३,२,१ । काठ. ३०,१० । कपि ४६,८ । वा १,१,१६,५० । काण्व १,१—३,१७,५० ।
[ मा वः स्तेन ईशत० । ४,२१,७ ]

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददा इति, सवितृप्रसूत एवैनां
देवताभिरादत्ते, प्रजापतिर्वा ओषधीः परुश्शो वेद, प्राजापत्योऽश्वो, यदश्वपर्श्वा बर्हिर्दा-
त्योषधीनामहिंसायै, गोषदसी,—ति रयिं यजमाने दधाति, प्रत्युष्टं रक्षः, इति रक्ष-
सामपहत्यै, प्रेयमगाद्धिषणा बर्हिरच्छेति, विद्या वै धिषणा विद्ययैवैनदच्छैति, मनुना कृता
स्वधया वितष्टेति, मनुना ह्येषा कृता स्वधया वितष्टा तया वहन्ते कवयः पुरस्तादिति, ब्राह्मणाः
कवय, ऋषयः कवयः ॥ ९
देवेभ्यो जुष्टमिह बर्हिरासदे ॥ १०
इति देवेभ्य एवैनज्जुष्टं करोति, देवानां परिषूतमसीति, यद्वा इदं किंच तद्देवानां परिषूतं,
यथा श्रेयसे प्रोच्य कर्म करोत्येवं वा एतद्देवेभ्यः प्रोच्य बर्हिर्दाति, यावत् परिदिशति तावत्
सन्नं दाति, यत्तत्सन्नं न दाति यज्ञस्य तदतिरेचयति, यद्वै यज्ञस्यातिरिच्यते भ्रातृव्यं तेन
वर्धयत्ये,—कं स्तम्बं परिदिशति, तं सर्वं दाति यज्ञस्यानतिरेचाय, विष्णोः स्तुप इति,
विष्णोर्वै स्तुपोऽच्छिद्यत, स पृथिवीं प्राविशद्, यत् प्रथमं नोत्सृजेदार्तिमार्छेद्, देवस्य त्वा
सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां बर्हिर्देवसदनं दामीति, सवितृप्रसूत एवै-
नद्देवताभिर्दाति ॥ मा वो मोपरि परुस्त ऋध्यासम् ॥ इत्योषधीनामहिंसायै ॥ आच्छेत्ता ते
मा रिषम् ॥ इति यावद्यानदेवैरविद्वानध्रुवं बर्हिर्दाति तावदस्यात्मनो मीयते, नास्यात्मनो मीयते य
एवं वेदा,—ऽतस्त्वं बर्हिः शतवल्शं विरोहे,—त्योषधीष्वेव भूमानं दधाति, सहस्रवल्शा
वि वयं रुहेमे,—त्याशिषमेवाशास्ते, ऽदित्या रास्नासीती,—यं वा अदिति,—रस्या एवैनद्रा-
स्नां करोती,—न्द्राण्याः संनहनमिती,—न्द्राणी वा अग्रे देवतानां समनह्यत सर्द्धिकामा,
साऽर्ध्नोद्, ऋध्नोति य एवं वेद, बर्हिः संनह्यति, प्रजा वै बर्हिः, प्रजानां संतत्यै
प्रजानामपरावापाय, तस्मात् स्नात्रा प्रजाः संतताः, पूषा ते ग्रन्थिं ग्रथ्नात्विति, पुष्टिर्वै पूषा,
पुष्टिं यजमाने दधाति, स ते मास्था,—दिति यजमानस्याहिंसायै ॥ ११–१५
आपस्त्वामश्विनौ त्वामृषयः सप्त मामृजुः । बर्हिः सूर्यस्य रश्मिभिरुषसां केतुमारभे ॥ १६
इत्यश्विनौ वै देवानां भिषजौ, तावेनद्भिषज्यता, इन्द्रस्य त्वा बाहुभ्यामुद्यच्छ इती,—न्द्र-

---

[ ९ ] मै १,१,२ । तै ब्रा ३,२,२ । काठ ३१,१ । कपि ४७,१ । वा १,१०,२१,२४,२,११,५,२२,२६,६,१,९,३०; ९,३०,३८,१७,९,२८,१८,३७,२०,३,३७,१,३८,६,१,७,२९ । काण्व १,१३,३६,४०,२,२२,५,२८,३३,६,१, ७०,८३,१०,३९,१२,४,१२,९,२८,२०,७,२१,९३,३७,१,३८,१,१,१०,५६ । [ देवस्य त्वा सवितु.० । अथर्व १९,५१,२ ]

स्यैवैनद्बाहुभ्यामुद्यच्छते, बृहस्पतेर्मूर्ध्ना हरामीति, ब्रह्म वै बृहस्पति,—र्ब्रह्मणैवैनद्धरत्यु,—र्वन्तरिक्ष,—मिति समिष्टया एवा,—ऽऽदित्यास्त्वा पृष्ठे सादयामीती,—यं वा अदितिरस्यामेवैनदसीपदत् ॥ व्राहिरसि देवंगमम् ॥ इत्यासन्नमभिमन्त्रयते, बहु वा एतस्य पूर्वेद्युराह्रियमाणस्येह चेह च स्कन्दत्य,—स्कन्नमेनद्देवताभ्यः संप्रादाद्यजमानस्याहिंसायै ॥ २ ॥ १७-१९

पूर्वेद्युरिध्मा बर्हिः कुर्वन्ति, यज्ञमेवारभ्योपवसति, प्रजापतिः प्रजा असृजत, तस्योरौ अस्रंसेताम्, स एताभ्यामुखाभ्यां प्रत्यधत्त, यदेते उखे भवतः, प्रजापतेरेवोरौ प्रतिदधाति, शुन्धध्वं दैव्याय कर्मणा, इति देवेभ्य एवैनानि शुन्धति, वसूनां पवित्रमसीति, वसूनां वा एतद्भागधेयं, तेभ्य एवैनत् करोति, पवित्रमपिदधात्यो,—षधीनां च पशूनां च पयः संसृजति, वाचं यच्छति यज्ञस्य धृत्यै, धारयन्नास्ते, धारयन्त इव हि दुहन्ति, द्यौरसि पृथिव्यसीत्या,—भ्यामेवैना प्रवृणक्ति, मातरिश्वनो घर्म इत्य,—न्तरिक्षं वै मातरिश्वनो घर्मो, ऽन्तरिक्षस्य धृत्यै, कामधुक्षः, सा विश्वायुः, सा विश्वभूः, सा विश्वकर्मेत्य,—सौ वाव विश्वायु,—रन्तरिक्षं विश्वभू,—रियं विश्वकर्मे,—मान्वा एतल्लोकान् यथापूर्वं प्रदापयत, इमांल्लोकान् यथापूर्वं प्रत्तान् दुहे य एवं वेद, तिस्रो यजुषाभिमन्त्रयते, त्रयो वा इमे लोका, एषु वा एतं लोकेषु रसं दधाति, तस्मादिमांल्लोकान् प्रजा उपजीवन्ति, हुतः स्तोको हुतो द्रप्स, इत्यभिमन्त्रयतेऽस्कन्दाय ॥ इन्द्राय देवेभ्यो हविरिहं दुग्धि ॥ इति त्रिरुद्वदति, त्रिपत्या हि देवा, न दारुपात्रेण दुह्या,—दग्निमद्धि दारुपात्रं, यातयामेन हविषा यजेत, तद्ध स्माहुर्दात्रेयाः पुरोडाशमुखं हवि,—र्न वा इतं इतः पुरोडाशं हविषो यामोऽस्ति, दोग्धव्यमेवेति, न शूद्रो दुह्या,—दसतो वा एष संभूतो, ऽसन्नस्याद्, यद्धि पवित्रमत्येति तद्धवि,—रग्निहोत्रमेव शूद्रो न दुह्याद्, तद्धि नोत्पुनन्ति ॥ २०-२२

संपृच्यध्वमृतावरीरूर्मिणा मधुमत्तमाः । पृञ्चतीः पयसा पयो मन्द्रा धनस्य सातये ॥ २३

इति प्रतिनयति शृतत्वाय, शृतकामा हि देवा, इन्द्राय त्वा भागं सोमेनातनच्मीति, सौम्यमेवैनत् करोति, तस्य ह त्वै सोमपीथः संततो य एवं विद्वान्त्सांनाय्यं पिबति ॥ अदस्तमसि विष्णवे त्वा ॥ इति, यज्ञो वै विष्णु,—र्यज्ञायैवैनददस्तं करोति, विष्णो हव्यं रक्षस्वेति, यथाहैव ते भागस्तं रक्षस्वेत्ये,—वं वा एतद्विष्णुमाह,—तत्ते हव्यं, तद्रक्षस्वेति,

[ ३ ] मै. १,१,३ । तै. बा. ३,२,३ । कठ ३१,२ । का॰ ४७,२ । श॰ १,२,४ । कप॰ १,४,७ ।

*

नं मृत्पात्रेणापिदध्यात्, पितृदेवत्यꣳ हविः स्याद्, दारुपात्रेणापिदध्या,—दग्निमद्वै दारुपात्रं,—मुग्निरेव हव्यꣳ रक्षत्यु,—दन्वत्काऽर्य,—मापो वै रक्षोघ्नी,—रपो रक्षाꣳसि नं तरन्ति, रक्षसामपहत्यै ॥ ३ ॥ २४--२६

यो वै श्रद्धामनालभ्य यजते नास्य देवमनुष्या इष्टाय श्रद्दधत्य,—पः प्रणयत्या,—पो वै श्रद्धा, श्रद्धामेवालभ्य यजता, आपो यज्ञो, यज्ञं तत्वा प्रचरत्या,—पो देवानां प्रियं धाम, देवानां प्रियं धाम प्रणीय प्रचरत्या,—पः सत्यꣳ, सत्यमेवालभ्य यजता, आपो रक्षोघ्नी, रक्षसामपहत्या, आपो वज्रो, वज्रं भ्रातृव्याय प्रहरति स्तृत्या, आपः श्रद्धा, श्रद्धास्य देवाः श्रन्मनुष्या इष्टाय दधते यस्यैवꣳ विदुष एवꣳ विद्वानपः प्रणयति, देवीरापोऽग्रेगुवा, इति यज्ञमेव प्रणयति, देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददा, इति सवितृप्रसूत एवैनद्देवताभिराद्दत्त उर्वन्तरिक्ष,—मिति समिष्टया एव, प्रत्युष्टꣳ रक्षा, इति रक्षसामपहत्यै, धूरसि, ध्वर ध्वरन्तमिति, धुर्यो वै नामैषोऽग्निर्यदनालभ्यातीयाद्, यजमानꣳ शुचार्पयेद्, द्वौ वात्र पुरुषस्य भ्रातृव्यौ, यं द्वेष्टि यश्चैनं द्वेष्टि, ता एव शुचार्पयति ॥ ॥ ४ ॥ २७

देवानामसि वह्नितमꣳ सस्नितमं पप्रितमं जुष्टतमं देवहूतम,—मिति देवेभ्य एवैनद्वह्नितमꣳ सस्नितमं पप्रितमं जुष्टतमं देवहूतमं करोत्य,—ह्रुतमसि हविर्धानं, दृꣳहस्व, मा ह्वा,—रिति दृꣳहत्येवैनद्, विष्णोः क्रमोऽस्यु,—रु वातायेति, यद्वै किंच वातो नाभिवाति तद्वरुणस्या,—वरुण्यमेवैनत् करोति, मित्रस्य वश्चक्षुषा प्रेक्षा, इति मित्रमेवैनान् कुरुते ॥ ऊर्जे गृहीत ॥ इत्यूर्जꣳ यजमाने दधाति ॥ प्रभूत्यै वः ॥ इति प्रैवैनान् भावयति, देवस्य वः सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ, यच्छन्तु पञ्च, गोपीथाय वो नारातये, ऽग्नये वो जुष्टानिर्वपामी,—ति सवितृप्रसूत एवैनान् देवताभिर्निर्वपति, यच्छन्तु पञ्चेति, पञ्च वा ऋतव, ऋतून् वा एतत् प्रीणाति, तेऽस्मै प्रीताः कल्पन्ते, गोपीथाय वो नारातया, इति रक्षसामपहत्या, अग्नये वो जुष्टानित्य,—ग्न एवैनान् जुष्टान् करोत्य,—थो यस्यै देवतायै निर्वपति तस्या एनान् जुष्टान् करोती,—दं देवानामिदमु नः सहे,—ति व्यावृत्त्यै, दृꣳहन्तां दुर्या, इति

[ ४ ] मै १,१,४ । तै. ब्रा. ३,२,४,१ । काठ ३१,३ । कपि ४७,३ । वा. १,७—८,१०,११,२१,२४,२६,३१। काण्व. १,१०—११,२३,२७,३६,४०,४६,४९ ।

[ ५ ] मै १,१,५ । तै ब्रा ३,२,४,४ । काठ. ३१,३ । कपि. ४७,३ । वा १,७—११ । काण्व १,१०,१२—१५ ।

हविषो गृहीतादिमे लोका उदवेपन्त, तान्देवा एतेन यजुषादृ॑ह्न्, यदेतद्यजुर्वदत्येषां लोकानां धृत्यै, निर्वरुणस्य पाशादमुक्षी,—ति वरुणपाशादेवं निर्मुच्यत आत्मनोऽहि॑ंसायै, स्वरभिव्येख्य,—मिति तम इव वा एष प्रपद्यते परीणद्ध॑, स्वरेवाभिविपश्यति, ज्योतिर्वैश्वानरमि-त्य,—सौ वा आदित्यो ज्योतिर्वैश्वानरम् ॥ उर्वन्तरिक्षमन्वेमि ॥ इति यं द्विष्यात्तं ध्यायेदायुकोऽ-ध्वर्युः स्यात् ॥ उर्वन्तरिक्षमन्वेमि ॥ इत्यनायुकोऽध्वर्युर्भवत्य,—दित्या उपस्थे सादयामी-ती,—यं॰ वा अदिति,—रस्यामेवैनानसीपदत् ॥ अग्ने हव्य॑ रक्षस्व ॥ इति पुर उपसादयत्य,—ग्निरेव हव्य॑ रक्षते ॥ ५ ॥ २८–३८

विष्णोर्मनसा पूते स्थः ॥ इति, यज्ञो वै विष्णु,—र्यज्ञायैवैने पुनाति, देवो वः सवितो-त्पुनात्वि,—ति सवितृप्रसूत एवैना उत्पुनात्य,—ग्नये वो जुष्टा,—नित्यग्नय एवैनान् जुष्टान् करोत्य,—थो यस्यै देवतायै प्रोक्षति तस्या एनान् जुष्टान् करोति, यद्वाऽशुद्ध आलेभे तच्छुन्धध्व,—मिति शुन्धत्येवैनान्, यददित्यास्त्वगसीती,—यं॰ वा अदिति,—रस्या एवैनांस्त्वचं करोत्य,—वधूत॰ रक्ष, इति रक्षसामपहत्यै, प्रतीचीनग्रीवं कृष्णाजिनमुपस्तृणाति, तस्मात्प्रत्यञ्चः पशवो मेधमुपतिष्ठन्ते, पृथुग्रावासि वानस्पत्य, इति ग्रावाणमेवैनत् करोत्य,—ग्नेर्जिह्वासि वाचो विस-र्जनमित्य,—ग्नेर्ह्येषा जिह्वा वाचो विसर्जन॰, यदा हि पशव ओषधीनामश्नन्त्यथ वाच॑ वि-सृजन्त्या, आयुषे त्वा, इत्यायुर्यजमाने दधाति, बृहद्ग्रावासि वानस्पत्य, इति ग्रावाणमेवै-नत् करोति, देवेभ्यो हव्य॑ शमीष्वे,—ति देवेभ्य एवैनत् करोति ॥ अपहत॰ रक्षः ॥ इति रक्षसामपहत्यै ॥ हविष्कृदेहि ॥ इति यो देवाना॰ हविष्कृत्त॑ ह्वयति, त्रिर्ह्वयति, त्रिषत्या हि देवा, मनोर्वै श्रद्धादेवस्य यजमानस्यासुरघ्नी वाग्यज्ञायुधानि प्रविष्टासीत्, तस्या वदन्त्या यावन्तोऽसुरा उपाशृण्व॑स्तावन्तस्तदहनाभव,—न्नेव॑ विद्वान् ब्राह्मणो भ्रातृव्याणां मध्येऽनुसाय यजेत, यावन्त एवास्य भ्रातृव्या यज्ञायुधानामुपशृण्वन्ति तेषां तेज इन्द्रियं॰ वीर्यं॰ वृङ्क्ते, कुक्कुटोऽसि मधुजिह्वस्त्वया वय॑ संघात॑ संघातं जेष्मेति, संघात॑संघात॰ वा एतेन यजमानो भ्रातृव्यं जयतीष,—मावदो,—र्जमावद, रायस्पोषमावदेत्या,—शिषमेवाशास्ते ॥६॥ २९–४४

[६] मै १,१,६ । तै ब्रा ३,२,५१ । काठ. ३१,४,। कपि ४७,४ । वा १.१२—१६ । काण्व १,१६,१८—२१, २३—२४,२६ ।

भस्मनाभिवासयेत् पलितंभावुकोऽध्वर्युः स्या,—ज्ज्वालैरभिवासयत्यपलितंभावुकोऽध्वर्युर्भवति, ते वै देवास्तं नाविन्दन् यस्मिन् यज्ञस्य क्रूरमाक्ष्यामहा इति, ऽसोऽग्निरब्रवी,—दहं वस्तं जनयिष्यामि यस्मिन् यज्ञस्य क्रूरमाक्ष्यध्वा इति, ऽसोऽपोऽङ्गारेणाभ्युपातयत्, तत एकतोऽजायत, द्वितीयं, ततो द्वित,—स्तृतीयं, ततस्त्रितो, यदद्भ्योऽधिनिरमिमीत तदाप्येयानामाप्येयत्वं, यदात्मनोऽधिनिरमिमीत तदात्मेयानामात्मेयत्वं,—मन्तर्वेदि जुहोति, तदेनानवरुन्द्ध, उपरिष्टाद-भिघारयति भृतत्वाय, घृतकामा हि देवा,—स्ते देवा अतिमृजाना आय,—न्त्सूर्याभ्युदिते तेऽसृजत, यं सुप्तं सूर्योऽभ्युदेति सूर्याभ्युदितः, सूर्याभिनिम्रुक्ते सूर्याभिनिम्रुक्तः, श्यावदति श्यावदन्, कुनखिनि कुनख्य,—ग्रेदधिष्यग्रेदधिः, परिवित्ते परिवित्तः, परिविविदाने परिविविदानो, वीरहणि वीरहा, भ्रूणहनि भ्रूणहनमेनो नात्येति ॥ ९ ॥ ५५–५९

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददा इति, सवितृप्रसूत एवैनं देवताभिराद्त्ते, सहस्रभृष्टिः शततेजा इति, वज्रं वा एतत् संश्यति भ्रातृव्याय प्रहरिष्यन्, पृथिवि देवयजनि मा हिंसिषं ता ओषधीनां मूल,—मित्योषधीनामहिंसायै, व्रजं गच्छ गोस्थानमिति, छन्दांसि वै व्रजो गोस्थान,—श्छन्दांस्येवास्मै व्रजं गोस्थानं करोति, वर्षतु ते पर्जन्या इति, पर्जन्यादेव वृष्टिं वनुते, बधान देव सवितः शतेन पाशैः परमस्यां परावतीति, द्वौ वाव पुरुषस्य भ्रातृव्यौ यं द्वेष्टि यश्चैनं द्वेष्टि, ता एव बध्नाति परमस्यां परावति, यो अस्मान् द्वेष्टि यं च वयं द्विष्मस्तमत्र बधान, सोऽतो मा मोची,—त्याशिषमेवाशास्ते, द्रप्सस्ते दिवं मा स्कानिति, यो वा अस्या रसः स द्रप्स,—स्तामिमं प्रजा उपजीवन्ति, तमस्यां यच्छत्यस्कन्दाय ॥ अररुस्ते द्यां मा पप्तत् ॥ इत्यररुर्वै नामासुर आसीत्, स पृथिवीमुपस्त्र्याशयत, तमिन्द्रोऽजायत, तं,—मपाररुं पृथिव्या अदेवयजन,—मित्यपाह,—न्त्स दिवमुपिपतिषत्, तम् ॥ अररुस्ते द्यां मा पप्तत् ॥ इति दिवः प्रत्यनुदत, य एवं विद्वांस्तम्ब्ययजुर्हरत्ये,—भ्यो वा एतल्लोकेभ्यो यजमानो भ्रातृव्यं निर्भजति, त्रिः कृत्वो हरति, त्रयो वा इमे लोका, एभ्य एव लोकेभ्यो भ्रातृव्यं निर्भजति, तूष्णीं चतुर्थं हरति, यो लोकौ निरुक्तोऽपरिमितस्तस्माद् भ्रातृव्यं निर्भजत्य,—सुराणां वा इयं पृथिव्यासीत्, ते देवा अब्रुवन्, दत्त नोऽस्याः पृथिव्या इति, तं वै स्वयमेव वृध्वमिति, ततो वै वसवः प्राचीं दिशमुदजयन्,

[ १० ] मै १,१,१० । तै ब्रा ३,२,९ । काठ ३१,८ । कपि ४७,८ । वा १,२४—२६ । काण्व १,४०—४३ ।

रुद्रा दक्षिणा,—मादित्याः प्रतीचीं, मरुता उदीचीं, ततो वै देवा इमामसुराणामविन्दन्त,
ततो देवा असुरानेभ्यो लोकेभ्यो निरभजꣳ,—स्ततो देवा अभवन्, परासुरा, यद्देवमेताभि-
र्देवताभिर्वेदिं परिगृह्णातीमाꣳ वा एतद्यजमानो भ्रातृव्यस्य वृङ्क्ते, ऽस्या भ्रातृव्यं निर्भजति,
भवत्यात्मना, परास्य भ्रातृव्यो भवति, पृथिव्यां वै मेध्यं चामेध्यं च व्युदक्रामत्, प्राची-
नमुदीचीनं मेध्यमुदक्रामद्, दक्षिणा प्रतीचीनममेध्यं, प्राचीमुदीचीꣳ वेदिं प्रवणां कुर्या,—
न्मेध्यानेनान् यज्ञियान् करो,—त्यथो यद्देवास्या उद्घ्नन्तः क्रूरमकꣳस्तदक्रूरमक,—स्तच्छमयत्यं,-
—थो मेध्यस्य चैवामेध्यस्य च व्यावृत्त्यै, प्राञ्चौ बाहू नयत्या,—हवनीयं तेन परिगृह्णाति,
प्रतीची श्रोणी, गार्हपत्यं परिगृह्णाति, मूलꣳ वै रक्षाꣳस्यनूत्पिबन्ति, यन्नखेन छिन्द्यात्
कुनखी स्याद्, स्फ्येन छिनत्ति, वज्रो वै स्फ्यो, वज्रेणैव रक्षाꣳसि हन्ति ॥१०॥ ६०-६४
यो वै स्रुचाꣳ योगमविद्वानध्वर्या इति हूतः प्रतिशृणोत्या देवताभ्यो वृश्चते, ऽपशुर्भवत्यं,-
—थ यः स्रुचाꣳ योगꣳ विद्वानध्वर्या इति हूतः प्रतिशृणोति न देवताभ्या आवृश्चते, पशुमान्
भवति, द्यौर्जुहू,—रन्तरिक्षमुपभृत्, पृथिवी ध्रुवा, दिश आज्यधान्य,—सा आदित्यः स्रुवः,
स यत् ॥ ओं श्रावय ॥ इत्याह जुꣳहूं तेन युनक्ति ॥ अस्तु श्रौषट् ॥ इत्युपभृतम् ॥ यजेति ध्रु-
वाम् ॥ ये यजामहे ॥ इत्याज्यधानीꣳ, वषट्कारेण स्रुवं, जुꣳह्वा अधि ध्रुवामभिघारयति,
ध्रुवाया अधि जुह्व,—मसौ ꣳह्यस्यै प्रयच्छती,—यममुष्यै, संततमस्मा अन्नाद्यमव्यवछिन्नं प्रदी-
यतेऽस्मिꣳश्च लोꣳकेऽमुष्मिꣳश्च, पूर्वास्य जनतामायतः कीर्तिरागच्छति य एवꣳ वेद ॥ ११ ॥
६५-७२

घृतं च वै मधु च प्रजापतिरासीद्, यतो मध्वासीत् ततः प्रजा असृजत, तस्मान्मधोः प्र-
जननमस्ति, तस्मान्मधुना न प्रचरन्ति, यातयामꣳ हि तदाज्येन प्रचरन्त्य,—यातयामꣳ वा
एतत् प्राजापत्यं घृतं,—मयातयामा देवानां प्रजापतिर्गार्हपत्येऽधिश्रयति, पत्न्यवेक्षते, ऽन्वा-
रम्भो वा एष यज्ञस्य यत् पत्न्या, यज्ञमेनामन्वारम्भयत्य,—थो यत् पत्नी यज्ञे करोति मिथुनꣳ
वा एतत् क्रियते प्रजात्या, अमेध्यꣳ वा एतदयज्ञियꣳ यत् पत्न्यवेक्षत, आहवनीयेऽधि-
श्रयति, पुनात्येवैनान्, मेध्यमेनद्याज्ञियं करोति, स्फ्यस्य वर्त्म सादयति रक्षसामपहत्यै,

[ ११ ] तै. ब्रा. ३,२,१ । कपि ४७,९ ।
[ १२ ] मै. १,१,११ । तै. ब्रा ३,३,४ । काठ. ३१,९ । कपि. ४७,९ । वा ५,१५,१,२९ । काण्व ५,२०,१,४६ ।

वर्षवृद्धमसि, प्रति त्वा वर्षवृद्धं वेत्त्वि,—ति प्रतिष्ठित्या, उस्रा वै देवाः पशुभ्यो रक्षांसि निरबाधयन्त तुषैरोषधीभ्यो, यदाह, परापूतं रक्षः, परापूताराति,—रित्येताभ्युत्वैव यज्ञस्य रक्षांसि निरबाधयते ॥ देवो वः सविता विविनक्तु ॥ इति सवितृप्रसूत एवैनान् विविनक्ति ॥ सुविचा विविच्यध्वम् ॥ इत्याशिषमेवाशास्ते, सुफलीकृतान् कुर्यान्, मेध्यानेनान् यज्ञियान् करोति, त्रिः फलीकरोति, त्रिषत्या हि देवा, अदित्यास्त्वगसीती,—यं वा अदिति,—रस्या एवैनत्त्वचं करोत्य,—वधूतं रक्षा, इति रक्षसामपहत्यै, प्रतीचीनग्रीवं कृष्णाजिनमुपस्तृणाति, तस्मात् प्रत्यञ्चः पशवो मेधमुपतिष्ठन्ते, ऽदित्याः स्कम्भोऽसी,—ति शम्यामुपदधाती,—मे वै सहास्ता, ते शम्यामात्रं शम्यामात्रं व्यैतां, यच्छम्यामुपदधात्यनयोरेव विधृत्यै, धान्यमसि, धिनुहि देवानित्य,—तस्य वै यजुषो वीर्येण यावदेका देवता कामयते, यावदेका तावदस्या आहुतिः प्रथते, प्रथते प्रजया पशुभिर्य एवं वेद, प्राणाय त्वापानाय त्वा व्यानाय त्वे,—ति प्राणमपानं व्यानं तान् यजमाने दधाति, दीर्घामनु प्रसितिं संस्पृशेथा,—मायुषे धा, इत्यायुरस्मिन् दधाति, मित्रस्य वश्चक्षुषावेक्षा, इति मित्रमेवैनान् कुरुते, देवो वः सविता हिरण्यपाणिरुपगृह्णात्वि,—ति सवितृप्रसूत एवैनानुपगृह्णाति ॥ ७ ॥ ४५–४९

निर्दग्धं रक्षा, इति रक्षसामपहत्यै, यदधस्तादङ्गारमुपवर्तयत्यस्मिंस्तेन लोके ज्योतिर्धत्ते, यदुपरिष्टादन्तरिक्षे तेना,—ऽसा अस्मा आदित्योऽमुष्मिँल्लोके ज्योतिर्भवत्य,—थो दिवैवास्मा अमुष्मिँल्लोके भवति सर्वेऽस्मा इमे लोका ज्योतिष्मन्तो भवन्ति य एवं वेद, त्रीणि समीचीनान्युपदधाति, त्रयो वा इमे लोका, एषां लोकानां धृत्या, अपाग्नेऽग्निमामादं जही,—ति य आमात् क्रव्यात्तमपहत्य देवयजने यज्ञिया उपदधाति, ध्रुवमसि, पृथिवीं दृंहे,—ति पृथिवीमेव दृंहति, धरुणमस्य,—न्तरिक्षं दृंहे,—त्यन्तरिक्षमेव दृंहति, धर्त्रमसि, दिवं दृंहे,—ति दिवमेव दृंहति, धर्मासि, विश्वा विश्वानि दृंहे,—ति दिश एव दृंहति, प्रजापतिर्वै यत् समभवत् स एतावच्छ एव समभव,—देकं वा अग्रे शीर्ष्णः कपालं समभवत्य,—थ द्वितीयमथ तृतीयमथ चतुर्थमथ पञ्चममथ षष्ठमथ सप्तममथाष्टमं, यदष्टा उपदधात्यात्मानं वा एतद्यजमानः संस्कुरुते, तं संस्कृतममुष्मिँल्लोकेऽनुपरैति, यदष्टा उपदधाति

[७] मै १,१,७ । तै ब्रा ३,२,५,१० । काठ ३१,४—५ । कपि ४७,४—५ । वा १,२६,१९—२० । काण्व १, २५,३२—३४ ।

[८] मै १,१,८ । तै ब्रा ३,२,६—७ । काठ ३१,६ । कपि ४७,६ । वा १,१७—१८ । काण्व १,२७—३० ।

गायत्रीं तेन छन्द आप्नोति, यदेकादश त्रिष्टुभं तेन, यद् द्वादश जगतीं तेना,—ऽथो सर्वाण्येव छन्दःसंमितान्युपदधाति ॥ चितः स्थ, परिचितः स्थ ॥ इति यजुष्मन्ति करोति, वसूना२ रुद्राणामादित्यानां भृगूणामङ्गिरसां घर्मस्य तपसा तप्यध्व,—मित्येतासामेनानि देवतानां तपसा तपति ॥ ५०—५२

यानि घर्मे कपालान्युपचिन्वन्ति वेधसः । पूष्णस्तान्यपि व्रत इन्द्रवायू विमुञ्चताम् ॥ ५३

इति यजुषैव युज्यन्ते, यजुषा विमुच्यन्ते ॥ ८ ॥ ५४

देवस्य वः सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्या२ संवपामी,—ति सवितृप्रसूत एवैनां देवताभिः संवपति, पवित्रवत्संवपति, हविः करोति, देवो वः सवितोत्पुनात्वि,—ति सवितृप्रसूत एवैना उत्पुनात्य,—प उपसृजत्य,—मृतं वा आपो, ऽमृतमेव हविः करोति, समापा ओषधीभिर्गच्छन्ता२, समोषधयो रसेन, सं२ रेवतीर्जगतीरित्य,—न्या वा एतासामन्या जिन्वन्त्या,—पा ओषधीर्जिन्वन्त्यो,—षधीरपः, शिवाः शिवाभिः संसृक्ष्ताऽपा इत्या,—पो वै रेवती,—रोषधयो मधुमतीः, पशवो जगती,—रप ओषधीः पशू२स्तानसे सु२सृज्यैकधा मधुमतः करोति ॥ मखस्य शिरोऽसि ॥ इत्याह यज्ञो वै मख,—स्तस्य वा एतच्-छिरः क्रीयते, सीदन्तु विशो, जनयत्यै त्वे,—ति मिथुनमेव करोति, घर्मोऽसि विश्वायु,—र्घर्मं घर्मं प्रथस्वो,—रु प्रथस्वो,—रुं ते यज्ञपतिः प्रथतामिति, प्रथयत्येवैनं ॥ प्रति प्रथस्व पृथिवीमुत द्याम् ॥ इतीमे एव प्रथयति, घर्मो वा एषोऽर्धमासेऽर्धमासे प्रवृज्यते, स ईश्वरोऽशान्तस्तेजसा यजमानस्य पशून्निर्दहो यत् पर्यग्नि करोति पशुमेव करोति शान्त्या अनिर्दाहाय, त्रिः पर्यग्नि करोति, त्रयो वा इमे लोका, एभ्य एवैनं लोकेभ्यः शमयति, पुरोडाश२ वा अधिश्रित२ रक्षा२स्यजिघा२सु,—न्तस नाको नाम दिवि रक्षोहाऽग्निः, सोऽस्माद्रक्षा२स्यपाहरन्, यदाह, देवस्त्वा सविता श्रपयतु वर्षिष्ठे अधि नाके पृथिव्या, इति रक्षसामपहत्यै, शिरो वा एतद्यज्ञस्य यत् पुरोडाशः, केशा वेदो, यथा शीर्ष्णः कपालान्येवं कपालानि, यथा मस्तिष्क एवं पुरोडाशः, सुशृतः कार्यो मेध्यत्वाय, यत् पुरोडाशं नाभिवासयेदावर्मस्तिष्कः स्याद्, यदभि-वासयति तस्माद्गुहा मस्तिष्कस्त्वचं ग्राहयति, तस्मान्मस्तिष्कः परिवृतो भस्मनाभ्यूहति, तस्मान्मा२सेनास्थि छिन्नं ज्वालैरभिवासयति, तस्मात् केशैः शिरश्छिन्नं२, यच्चर्चमग्राहयित्वा

[ ९ ] मै. १,१,९ । तै. ब्रा. ३,२,३ । कठ ३१,७ । कपि ४७,७ । वा. १,२१—२२,११,५७,३७,८ । काण्व. १, ३६—३८,१२,५९,३७,८ ।

देवस्त्वा सवितोत्पुनात्विति, सवितृप्रसूत एवैनदुत्पुनाति, हविरसि वैश्वानरमिति, द्वादशैता व्याहृतयो, द्वादश मासाः संवत्सरः, संवत्सरेण वा एतं चेन्द्रियꣳ वी३र्यꣳ यजमानो भ्रातृव्यस्य वृङ्क्त, उभयतो वैश्वानरं भवत्यु,—भयतो वैश्वानरꣳ ३ह्येवे,—निष्टेजा अस्य निर्वीर्यो भ्रातृव्यो जायते, ऽथो मृधतर एव भवति, देवाश्च वा असुराश्च संयत्ता आस,—न्तसं इन्द्र एतमवकाशमपश्यत्, तेनासुरानभ्यभव,—दभि भ्रातृव्यꣳ यज्ञेन भवति य एवꣳ विद्वान् यजता, आज्येनान्यानि हवीꣳष्यभिघारयन्ति केनाज्य,—मिति ब्रह्मवादिनो वदन्ति सत्येन वा आज्यमभिघृतं, यदाह, सत्येन त्वाभिघारयामीति, चक्षुर्वै सत्यं, चक्षुर्यजमानः प्रदधाति, संमील्यैतद्यजुर्वदति, न चक्षुः प्रदधात्या,—ज्यꣳ वै यज्ञो, यज्ञो विष्णुः ॥ ७३

इदꣳ विष्णुर्विचक्रमे त्रेधा निदधे पदा । समूढमस्य पाꣳसुरे ॥ ७४

इति यदोदनपचनेऽधिश्रित्याथ गार्हपत्येऽथाहवनीयेऽधिश्रयत्येतद्वाव तत् त्रिर्विष्णुर्विक्रमते, प्रत्युष्टꣳ रक्षा, इति रक्षसामपहत्यै, स्रुचः संमार्ष्टि, पुनात्येवैना, मेध्या एना यज्ञियाः करोति ॥ अनिशिताः सपत्नक्षयणीः ॥ इत्यनिशिता ३ह्येताः सपत्नक्षयणीः, स्रुवꣳ संमार्ष्टि, पुमाꣳसꣳ वा आसां तदग्रे संश्यत्य,—थ जु३ह्व,—मथोपभृत,—मथ ध्रुवा,—मसा आदित्यः स्रुवो, द्यौर्जुहू,—रन्तरिक्षमुपभृत्, पृथिवी ध्रुवे,—मान्वा एतल्लोकान् यथापूर्वꣳ संमाष्टर्य,—भ्यो लोकेभ्य आत्मानं परिददेऽहिꣳसायै, जु३ह्वमग्रे संमाष्टर्या,—त्मा वै जुहू,—रात्मानमेवोपैत्य,—थोपभृतं, प्रजा वा उपभृत्, प्रजामेवोपैति, परेव ३ह्यात्मनः प्रजा, ऽथ ध्रुवां, पशवो वै ध्रुवा, पशूनेवोपैति, पर इव हि प्रजायाः पशवो, यदुत्तानाः संमृज्यादप्रतिष्ठायुकꣳ रेतः स्याद्, यन्नीचीरप्रतिष्ठायुकꣳ रेतः स्यात्, तिरश्चीः संमार्ष्टि, तिर्यग्वै रेतः सिच्यते, प्रतिष्ठायुकꣳ रेतो भवति, यदग्रेण मुखं दण्डं च संमृज्याद्रक्षोभ्यश्चाभुवेभ्यश्च समदं दध्या,—दग्रेण मुखꣳ संमार्ष्टि, जघनेन दण्डꣳ, न रक्षोभ्यश्चाभुवेभ्यश्च समदं दधात्य,—न्तरतो जु३ह्वं प्राचीꣳ संमार्ष्टि बहिष्टात् प्रतीचीं, बहिष्टादुपभृतं प्राचीमन्तरतः प्रतीचीꣳ, सर्वतः समाहाय ध्रुवां प्राणानेवास्य यथापूर्वं कल्पयति, यजमानदेव३त्या वै जुहूर्भ्रातृव्यदेवत्योपभृ,—च्चतुर्गृहं जु३ह्वां भूया आज्यं गृह्णात्य,—ष्टौ गृहानुपभृति कनीय, उपास्त भ्रातृव्यमकृत ॥ १२ ॥

७५–७७

[ इदं विष्णुर्वि चक्रमे० । ऋ. १,२२,१७, सा. २२२,१६६९; अथर्व. ७,२६,४; तै. सं. १,२,१३,१; नि. १२,१९]

बर्हिरासादयेद्, यावतीर्वै प्रोक्षणीरासादयति तावतीरस्यामुष्मिँल्लोक आप,—स्तस्माद्बर्हिरासाद्या, अग्नेर्मेधोऽपाक्रामत्, स कृष्णो भूत्वा वनस्पतीन् प्राविशद्, यदाह, कृष्णोऽस्याखरेष्ठो, अग्नये पृतं भवेति, तमेव मेधमवरुन्द्धे, वेदिरसि, बर्हिषे त्वा जुष्टं प्रोक्षामीति, प्रजा वै बर्हिः, पृथिवी वेदि,—रस्याꣳ वा एतत् प्रजाः स्वगाकरोति, यदुपरिष्टात् प्रोक्ष्याधस्तात् प्रोक्षति तस्मादुपरिष्टाद्वृष्टादधस्तादोषधयो जायन्ते ॥ ऊर्जं पृथिवीꣳ गच्छत ॥ इत्यस्यामूर्जमदधात्, तस्मादिमाः प्रजा उपजीवन्ति, विष्णोः स्तुपोऽसी,—ति मुखतः प्रस्तरं गृह्णाति मुख्यमेनं तेन शीर्षण्यं करोति, यावद्धस्तेन पर्याप्नुयात्तावन्तं गृह्णीया,—द्दंक्षोधुको यजमानो भवति, नोर्ध्वमुन्मृज्याद्, यदस्य वित्तं वेद्यं तत् प्रमृज्या,—त्प्राचीनमनुमृज्याद्, यदेनमागमिष्यत् तत् प्रतिनुदेत, न विधूनुयात्, प्रजां पशून् विधूनुयाद्, यदुपतिष्ठेत्तदुपसंगृह्णीयाद्, यथाशितायोपचिनोत्येवमेव तद्दक्षिणतः शुल्बꣳ स्तृणाति, तस्माद्दक्षिणतो नीवी,—रुरु प्रथस्वोर्णम्रदसमिति, प्रथयत्येवैनत्, स्वासस्थं देवेभ्य इति, देवेभ्य एवैनत् करोति, प्रस्तरं धारयन् परिधीन् परिदधाति, स्वयꣳ वा एतद्यजमान आत्मानं परिधत्तेऽहिꣳसायै, न पुरस्तात् परिदधात्यु,—यन्वा असौ आदित्यो रक्षाꣳस्यपाहतो,—यन्नेदस्मा असौ आदित्यो रक्षाꣳस्यपहन्त्यू,—र्ध्वे समिधा आदधात्यु,—परिष्टादस्माच्चैन रक्षाꣳस्यपहन्ति, द्वे आदधाति. मिथुनत्वाय, विधृती स्थ इति, विधृती एवैने करोति ॥ अदित्यास्त्वोपस्थे सादयामि ॥ इती,—यं वा अदिति,—रस्यामेवैनमसीषदद्, वसूनाꣳ रुद्राणामादित्यानाꣳ सदोऽसीत्ये,—ता वा एतामग्रे देवतामभ्युजयꣳ,—स्ताभ्य एवैनत्सदः करोति, घोरसि जन्मना जुहूर्नाम प्रिया देवाना प्रियेण नाम्ना ध्रुवे सदसि सीदेत्ये,—तद्वा आसा प्रियं नाम यद् घृतवत्, तदेवावरुन्द्धे, ता विष्णो पाहि, पाहि यज्ञं, पाहि यज्ञपतिं, पाहि मां यज्ञन्यमिति, यथा ह्येष ते भागस्तꣳ रक्षस्वेत्ये,—षं वा एतद्विष्णुमाह,—तस्या आज्यं, तद्रक्षस्वेति, वेदिर्देवेभ्योऽपाक्रामत्, तां देवा वेदेनाविन्दꣳ,—स्तद्वेदस्य वेदत्वꣳ, स्त्री वेदिः, पुमान् वेदो, यद्वेदेन वेदिꣳ संमार्ष्टि मिथुनत्वाय, सततमाहवनीयात् स्तृणन्नेति यज्ञस्य सतत्यै, तꣳ सततमुत्तरेऽर्धमासेऽभियजते, वनस्पतीनाꣳ वा एष परिवेष्टा यदुपवेषं, श्रद्धा अस्य वेशा भवन्ति य एवं वेद, पुरस्तात् प्रत्यञ्चमुपहन्ति, तस्मात् प्रतीचीनाग्रास्वितो वेशाः,

[१३] मै १,१,११—१२ । तै ब्रा ३,३,३ । कठ ३१,१० । क. ४७,१० । श १,१—१,५ । [illegible] २,१—२, ४,७—९ ।

स्थविमतं उपहन्त्य,—नतिवादिन एनꣳ वेशा भवन्ति, सर्वस्मै वै यज्ञो क्रीयते, सर्पा वा
उपवेपा, वल्मीक उत्करो, यदुपवेपमुत्करे उपहन्ति तस्मात् सर्पाणाꣳ वल्मीको गृहाः ॥
॥ १३ ॥ ७८-८२

भुवनमसि ॥ इति भूतिमाशास्ते ॥ विप्रथस्व ॥ इति प्रथयत्येवैनु,—दितं इन्द्रास्तिष्ठन् वीर्यमक्र-
णोद्देवताभिः समारभ्येत्य,—तो हीन्द्रास्तिष्ठन् वीऽर्यमक्रणोद्देवताभिः समारभ्य ॥ जुहे,—ह्यग्निष्ट्वा
ह्वयति, देवान् यक्ष्यावो देवयज्याया, उपभृदेहि, देवस्त्वा सविता ह्वयति, देवान्
यक्ष्यावो देवयज्यायै ॥ इति, न वा एतं अविदुषा स्वादुनं इव वरुणपाशाऽन् ह्याक्रमत्येता-
भिरेने देवताभिरादत्ते वरुणपाशानामनाक्रमाय, विष्णोः क्रमोऽसीत्य,—तिक्रामति यज्ञस्यान-
वक्रामायो,—ध्रुवो अध्वरो दिविस्पृगह्रुतो यज्ञो यज्ञपते,—रित्यृजुमूर्ध्वमाघारमाघारयति यज्ञस्या-
ह्रुत्यै,—न्द्रवान्स्स्वधा,—निति सेन्द्रꣳ यज्ञमकृता,—ऽथो इन्द्रियं तेनावरुन्द्धे ॥ वसुमतस्ते छाया-
मुपस्थेषम् ॥ इत्यग्निर्वै वसुमा,—नग्नेरेव छायामुपतिष्ठत, ऋजुमूर्ध्वमाघारमाघारयेत्, प्राणो वा
आघारः, सर्वमायुर्यजमान एति, यं द्विष्याचेस्याघार्यं कुधु छिन्द्यात्, प्राणमस्य छिनत्ति,
ताजक् प्रमीयते, शिरो वा एतद्यज्ञस्य यदाघार, आत्माज्यꣳ, यदाघारमाघार्योपभृता सम-
ञ्ज्याच्छिरो, यज्ञस्य प्रच्छिन्द्या,—दाज्यधान्या समनक्ति ॥ ८३-९०

समक्तमग्निना हविः समक्तꣳ हविषा घृतम् ॥ इत्यात्मन् यज्ञस्य शिरः प्रत्युधा,—दथो मनु
एव यज्ञे प्रतिदधाति, स्तनꣳ स्तनिनीः प्रजा उपजीवन्ति, किमस्तना, इति ब्रह्मवादिनो
वदन्त्य,—मी रिहाणा व्यन्तु वया इत्ये,—तद्वाव ता उपजीवन्ति, वशा पृश्निर्भूत्वा मरुतो
गच्छेत्ति, मरुतो यै वृष्ट्या ईशते, तेऽस्मै वृष्टिं निनयन्ति, ततो नो वृष्ट्यावर्तेति, मरुद्भ्य
एव वृष्टिꣳ वनुते, चक्षुष्पा अग्नेऽसि, चक्षुर्मे पाहीति, चक्षुरेवास्य पाति, श्रोत्रपा अग्ने-
ऽसि, श्रोत्रं मे पाहीति, श्रोत्रमेवास्य पाति, तनूपा अग्नेऽसि, तन्वं मे पाहीति, तन्व-
मेवास्य पाति, यन्मे अग्न ऊनं तऽन्वस्तन्मा आपृणत्या,—शिषमेवाशास्ते ॥ ९१-९२

यं परिधिं पर्यधत्था अग्ने देव पणिभिर्वीयमानः ।
तं त एतमनु जोषं भरामि नेदेष युष्मदपचेतयाते ॥ ९३

[ १४ ] सं २,२,१३। ते. ब्रा ३,३,७,५—११। काठ. ३१,११। कपि ४७,११। वा २२,३,५,४२,१२,५,२,८,
१६-१८,२१,२४,२७,३,१७। काण्व. २४,३,५,५३,१३,६,२,१२,३२-२५,३९,१५,१७,३,२३—२४।
[ विष्णोः क्रमोऽसि। अथर्व १०,५,२५-३५ ]

इति यजुषैव युज्यन्ते, यजुषा विमुच्यन्ते, सꣳस्रावभागाः स्थेषा बृहन्ता, इति परिधीन् प्रहृत्याभिजुहोत्य्,—एषो वा एवं तान् प्रीणाति, तान्त्समयति भागधेयेन, ब्रह्मवादिनो वदन्ति, स त्वा अध्वर्युः स्याद्, यो यतो यज्ञं प्रयुङ्क्ते तत् प्रतिष्ठापयतीति, देवा गातुविदो गातुꣳ वित्त्वा गातुमित, मनसस्पते सुधात्विमꣳ यज्ञं दिवि देवेषु वाते धाः स्वाहेत्य,—तो वा अध्वर्यु-र्यज्ञं प्रयुङ्क्ते, तदेवैनं प्रतिष्ठापयति ॥ १४ ॥ ९४

[ २०५७ ]

॥ इति खिलकाण्डे प्रथमः प्रपाठकः ॥ १ ॥

---

अथ द्वितीयः प्रपाठकः ।

## गोनामिकः ।

प्रजापतिर्वा एक आसीत्, सोऽकामयत, बहुः स्यां, प्रजायेयेति, स मनसात्मानम-ध्यायꣳत्, सोऽन्तर्वाणभवत्, स विजायमानो गर्भेणाताम्यत्, स तान्तः कृष्णः श्यावोऽभ-वत्, तस्मात्तान्तः कृष्णः श्याव इव भवति, तस्य वा असुरेवाजीवत्, तेनासूनासुरानसृजत्, तदसुराणामसुरत्वꣳ, स यस्तदसुराणामसुरत्वꣳ वेदासुमान् ह भवति, नैनमसुर्जहाति, सोऽसुरान्त्सृष्ट्वा पितेवामन्यत, तेनु पितॄनसृजत, तत् पितॄणां पितृत्वꣳ, स यस्तत् पितॄणां पितृत्वꣳ वेद पितेव ह समानानां भवति, यन्त्यस्य पितरो हवं, तस्य पितॄन्त्ससृजानाय दिवा-भवत्, तेनु देवानसृजत, तद्देवानां देवत्वꣳ, स यस्तद्देवानां देवत्वꣳ वेद दिवा ह वा अस्मै देवत्रा भवति, यन्त्यस्य देवा देवहूतिꣳ, स देवान्त्सृष्ट्वामनस्यतेव, तेन मनुष्यानसृजत, तन्मनुष्याणां मनुष्यत्वꣳ, स यस्तन्मनुष्याणां मनुष्यत्वꣳ वेद मनस्वान् ह भवति, नैनं मनो जहात्य,—त यदेतीव वदत्यति वा चरति तिष्ठन्तेऽस्य मनुष्या मनुर्य तेतो यो योनिरुदशिष्यत गो गौरभवद्, योनिर्वै नामैष,—तद्वा अस्याः प्रत्यक्षं नामा,—ऽघ्नो आहुः, परोक्षमिति, प्र सहस्रं पशूनाप्नोति य एवꣳ वेद, तस्याꣳ वै पयः पर्यपश्यꣳ,—स्तां देवा अदुह्न् हरितेन पात्रेणामृतं, दुहेऽमृतꣳ य एवꣳ वेदा,—ऽथ पितरोऽदुह्न् रजतेन पात्रेण स्वधां, दुहे स्वधाꣳ य एवꣳ वेदा,—ऽथ मनुष्या अदुह्न् दारुपात्रेणान्नꣳ वर्च, दुहेऽन्नꣳ वर्च य एवꣳ वेदा,—ऽथा-सुरा अदुह्नायस्पात्रेण संवृता सुरां, तेऽस्रवन्,—न्त्सर्ववृत्यस्य भ्रातृव्यो य एवꣳ वेद, तस्मात् संवृता न हस्ता अवनेनिजीत, न पिबे,—देते वा अस्या दोहाः, नैरियांस्या दोहः गौः

कामैर्भुङ्क्ते य एवं वेद चत्वारि वै नभांसि, देवाः पितरो मनुष्या असुराः, सर्वेषु ह वा एतेष्वम्भो नभ इव भवति य एवं वेद, तां वा अकामयन्त, मयि स्यान्मयि स्यादिति, तां देवाः काम्ये ॥ इत्याह्वयन्तसा वा एनानभ्यकामयतो,—भये ह वा एनं देवमनुष्या अभिकामयन्ते चारुका एनमार्त्विज्ये भवन्ति य एवं वेद ॥ श्रन्ये ॥ इति मनुष्याः, सा वा एनानशुश्रूषतो,—भये ह वा एनं देवमनुष्याः शुश्रूषन्ते पूर्वांस्य जनतामायतः कीर्तिरागछति य एवं वेद ॥ इलान्दे ॥ इति पितर,—स्तेभ्यो वा अतिष्ठत, तिष्ठन्त्यस्मिन् पशवो य एवं वेदा,—ऽथ यथासुरा आह्वय,स्तेभ्यो वा अत्रसद्, यं द्विष्यात्तस्य नेष्ठा गोष्ठ आह्वयेद्रसन्त्यस्मात् पशव, एतैरेव जुहुयात् ॥ गोनामैः स्रुग्भ्यां गोमूर्धन् पशुकामः ॥ काम्यायै स्वाहा श्रन्यायै स्वाहेलान्दायै स्वाहा ॥ इति गोष्ठो वै नामैषा लक्ष्मीः, स्वे वा एतद्गोष्ठे यजमानो भ्रातृव्यस्य पशून् वृङ्क्त, एतेष्वे ते ता अवृञ्जत, तेरेवैता वृङ्क्ते, स्रुग्भ्यां भवति पशूनां परिगृहीत्यै, यो वै चक्षुषो विभक्तिं वेद चक्षुष्मान् ह भवति, नैनं चक्षुर्जहाति, यद्दिवा पश्यामस्तद्देवानां चक्षुषा पश्यामो, ऽसौ वा आदित्यो देवानां चक्षुः, पश्यन् ह वै देवत्रा करोति, प्र देवयानं पन्था जानाति य एवं वेद, यज्ज्योत्स्नायां पश्यामस्तत् पितॄणां चक्षुषा पश्याम,—श्चन्द्रमा वै पितॄणां चक्षु,—र्न ह वा एनममुष्मिँल्लोके चक्षुर्जहाति प्र पितृयाणं पन्थां जानाति य एवं वेद, यत्तमिस्रायां पश्यामस्तन्मनुष्याणां चक्षुषा पश्याम, एतावद्वाव नः स्वं चक्षु,—र्न ह वा एनमस्मिँल्लोके चक्षुर्जहाति, सर्वमायुरेति य एवं वेद, यदन्धेऽन्ते पश्यामस्तदसुराणां चक्षुषा पश्यामा, उग्र वा एष दीप्यते नि च रिप्यति, दीप्यमानं भ्रातृव्यस्य गृहाद्धरेद्, रयिमेवास्य पुष्टिं हर,—त्वां ह सर्वेस्यांदेतांजागृयाद्, यत्सत्यादातिमाछेत्तज्जागरितव्यं, रयिमेव पुष्टिमनुजागर्ति ॥ १ ॥ १–९

यो वा इडां धेनुं वेद सर्वा ह वा अस्मै दिशो धेनवो भवन्ति, सर्वे प्रतिजना दानकामा,—स्तामिष्णाशनीरामित्रयोचनिर्विदाचकार, तस्मै सर्वा दिशो धेनवो भवन्ति सर्वे प्रतिजना दानकामा,—स्तस्मात् स सर्वः प्रतिजनैर्व्यवहतोपजनन्तसन्त्सर्वा ह्यस्मै दिशो धेनवो भवन्ति सर्वे प्रतिजना दानकामा,—स्तंय एवं वेद सर्वा एवास्मै दिशो धेनवो भवन्ति सर्वे प्रतिजना दानकामा,—स्तस्या वा इयमेव पादो, ऽन्तरिक्षं पादो, द्यौः पादः, समाः पादो, ऽपो आहुः, कृषिः पादा इति, तेन प्रति त्वदानीं तिष्ठति न त्वदानी, यदा

सुसस्यं भवत्यथ प्रतितिष्ठति, यदा न सुसस्यं भवत्यथ न प्रतितिष्ठति, भवति ह वा अस्य सस्यं नास्य सस्यꣳ व्यृध्यते य एवꣳ वेद, तस्या वा अद एव पृष्ठ—मन्तरिक्षमात्मा,—यमुरो, दिशः पार्श्वे, समुद्रौ कुक्षी, असा आदित्यः शिरो, ऽग्निरा३स्यꣳ, वातः प्राणो, गायत्र्यभिधानी, सर्वमायुरेति य एवꣳ वेदो,—रुत्तरवेदिः, पवमानो वत्सः, एष वा एनां प्रस्तौति, प्रत्तान् ह वा इमाँल्लोकान् दुहे य एवꣳ वेद, बृहद्रथन्तरे द्वौ स्तनौ, वामदेव्यं च यज्ञायज्ञियं च द्वौ, ओषधीरेव देवेभ्यो रथन्तरेणादुह, पशून् बृहता,—ऽपो वामदेव्येन, यज्ञꣳ यज्ञायज्ञियेन, तथ एवꣳ वेदौषधीरेवास्मै रथन्तरेण दुहे, पशून् बृहता,—ऽपो वामदेव्येन, यज्ञꣳ यज्ञायज्ञियेने,—डा वा इदꣳ सर्वꣳ, स सहस्रं पशून् आप, प्र सहस्रं पशूनाप्नोति य एवꣳ वेद ॥ २ ॥

यत्र प्राचीनप्रवणꣳ समूलं भूम्या स्यात् तदुपोदये सूर्यस्य हस्ता अवनिज्य दर्भस्तम्बे उदशरावं निनयेत्, कामंकामं मा आवर्तय ॥ इति कामेनैवास्मै काममावर्तयति यत्कामो भवति, यो वै कामꣳ साक्षाद्विद्व ताजग्ध वा एनꣳ स कामा आगच्छति यत्कामो भवति, पशुषु वा अस्माकं कामः, पशूनामोषधीष्वो,—षधीनामप्स्वो,—षधीरेव कामेन समसाद्, ता अस्मै कामꣳ समर्धयन्ति यत्कामो भवत्यो,—ष एवा,—ऽस्या वा एष वर्मिरुत्सृष्टश्चरति लोमशो लोमशाया,—स्तस्मादेषा शश्वसत्यैत्य,—ग्नि३र्हस्या आ३स्यꣳ, वातः प्राणो, यत्र गोभिः संगच्छेत तद्ब्रूयात् ॥ प्रशस्ताः कल्याण्यः ॥ इतीयꣳ वा एषे,—माꣳ वा एतत् समागयत्, यत्रामुका अस्मात् पशवो भवन्ति य एवꣳ वेद, देवाश्च वा असुराश्चास्पर्धन्ता,—ऽदितिर्देवेष्वासीत्कुस्तासुरेषु, ते देवा अमन्यन्त, यद्यभिजेष्यामः कुस्तायाः शिर आहनिष्यामा इति, यद्यभिजेष्यामा, इत्यसुरा अमन्यन्ता,—ऽदित्याः शिर आहनिष्यामा इति, तां देवा अभिजित्याघ्नत, यस्य वै जितꣳ यस्य विजितं तस्यैषा गृहे हन्यते, एषा वै क्षुत्, क्षुधꣳ वा एतद्धन्ते, तथ एवꣳ विद्वानेकाष्टकायां गाꣳ हते संवत्सरायैव क्षुधꣳ हते, प्रजापतिर्वा एक आसीत्, सोऽकामयत, बहु मनु स्यां प्रजायेयेति, स आत्मानमैद्ध, स मनोऽसृजत, तन्मन एकधासीत्, तदात्मानमैद्ध, तद्वाचमसृजत, सा वागेकधासीत्, सात्मानमैद्ध, सा विराजमसृजत, सा विराडेकधासीत्,

[३] मा. श्रौ. ९,५,१ ।

सात्मानमैद्, सा गामसृजत, सा गौरिकधासीत्, सात्मानमैद्, सेडामसृजत, सैडैकधासीत्, सात्मानमैद्, सेमान् भोगानसृजत, येरस्या इदं मनुष्या भुञ्जत एते वा अस्या भोगाः, सर्वैरेवास्या भोगैः सर्वैः कामैर्भुङ्क्ते य एवं वेद, गौर्वै वाग्, गौर्विराड्, गौरिडा, गोः खल्वेव गौ,—गौरिदं सर्वं, सर्वा ह वा एनमेताः श्रयन्ते य एवं वेद, यद्वै वेदात्मानमैद् सेडाभवत्, तदिडाया इडात्वं, स यस्तदिडाया इडात्वं वेदेद्धं ह वै स्वमात्मानं भूत्यै ॥ ३ ॥ ११–१४

या रोहिणी तामरुणां, तां गौरीं, तां बभ्रूः ॥ तदिन्द्रा उदाजत वसुर्नाम रूपं पशूनाम् ॥ विन्दते वसु, न वसु रुणद्धि य एवं वेद, या शितिपृष्ठा तां मन्दिं,—स्ता मेनी, तां शेभुलीं, तां शितिबाहुं,—स्तां शुद्धवालां ॥ तद्बृहस्पतिरुदाजदिडा नाम रूपं पशूनाम् ॥ बह्वीर्ह वा एनमिडाः श्रयन्ते य एवं वेद, या पृषती तां पिशङ्गीं, तां सारङ्गीं, तां कल्माषीं, तां पृश्निं,—स्तां श्वेतां ॥ तन्मरुता उदाजन्त ज्योतिर्नाम रूपं पशूनाम् ॥ ज्योतिष्मान् भवति य एवं वेद, या सुरूपा तां श्यामां, तां श्येनीं, तां कृष्णां ॥ तत् प्रजापतिरुदाजदायुर्नाम रूपं पशूनाम् ॥ आयुष्मान् भवति य एवं वेद, चतस्रः प्रथमा,—श्चतस्र उत्तमा, द्विः पञ्चमुच्यते,—स्ता द्विर्दश, दशाक्षरा विराड्, वैराजाः पशवः, पशूनेवावरुन्द्धे॥ वस्व्यै हिंकुरु, तस्यै प्रस्तुहि, तस्यै मेऽवरुद्धयै ॥ इति पुरस्ताद्बहिः पवमानस्य वदेत् ॥ इडायै हिंकुरु, तस्यै प्रस्तुहि, तस्यै मेऽवरुद्धयै ॥ इति पुरस्तादाज्यानां वदेत् ॥ ज्योतिषे हिंकुरु, तस्यै प्रस्तुहि, तस्यै मेऽवरुद्धयै ॥ इति पुरस्तान्माध्यंदिनस्य पवमानस्य वदेत् ॥ आयुषे हिंकुरु, तस्यै प्रस्तुहि, तस्यै मेऽवरुद्धयै ॥ इति पुरस्तादार्भवस्य पवमानस्य वदेत् ॥ यज्ञो वै पशूनामायतनं, स्वे वा एतदायतने यजमानो भ्रातृव्यस्य पशून् वृङ्क्ते, ऽनपक्रामुका अस्मात् पशवो भवन्ति ॥ ४ ॥ १५–३२

वसीयस्येहि, श्रेयस्येहि, भूयस्येहि, चित्ता एहि, दधृष्येही,—डा एहि, सूनृता एहि, चिदसि, मनासि, धीरसि वस्वी रन्तिः सुमनाः ॥ सूनरि विश्वा त्वा भूतान्यनुप्राणन्तु, विश्वा त्वं भूतान्यनुप्राण, भूयस्यायुरसी,—ष्टिरसि, संरूपवर्णा एहि ॥ ३३–३४

एमामनु सर्पतेमां भद्रां धुर्या अभि । नीव शीर्षाणि मृढ्वम् ॥ ३५

---

[ ५ ] वा ४,१९ । काण्व ४,२५ । मा. श्रौ ९,५,१ ।

सा नः सुप्रतूर्तिः प्रिया नः सुहार्दः प्रियवनिरघवनिरन्ता एहि, जुष्टा एही,—डा एहि,-
—दिता एहि,—प्रहूत उपहवं तेऽशीय, सुहवा न एहि सह रायस्पोषेण, देवीर्देवीरभि मा
निवर्तध्वम् ॥ ३६

स्योना स्योनेन घृतेन मा समुक्षत ॥ ३७

नमे तदुपदम्भिषर्धृषिर्ब्रह्मा यददो । समुद्रादुदजनि वः स्रुचा ॥ ३८

वारग्रे विप्रस्य तिष्ठति शृङ्गेभिर्दशभिर्दिशम् ॥ ५ ॥ ३९

वसीयस्येहीति, ब्रह्म वै वसीयो, ब्रह्म वा एतदुत्याह्वयति, श्रेयस्येहीति, क्षत्रं वै श्रेयः, क्षत्रं वा एतदुत्याह्वयति, भूयस्येहीति, विड्वै भूयसी, विशं वा एतदुत्याह्वयति, चित्ता एहीति, मनो वै चित्तं, मनो वा एतदुत्याह्वयति, दधृष्येहीति, वाग्वै दधृषि, वाचं वा एतदुत्याह्वयती,—डा एहीति, पशवो वा इडा, पशून् वा एतदुत्याह्वयति, सूनृता एहीत्य,—न्नं वै सूनृता,—न्नं वा एतदुत्याह्वयत्ये,—ता वै सप्त देवगव्य,—स्ताः कीतो वत्सहोत्रो विदांचकार, ताभिरदः कुरूणां क्रान्ते पशूनत्याह्वयत्, ताः कुरवो ब्राह्मणेभ्यन्विच्छं,—स्ताः कुमारवत्याश्वदक्षिणा अविन्द,—न्त्सोऽब्रवी,—न्मा यूयुत्वं,—ताभिर्वा अहमेता अत्याह्वयिष्यामी,—तराभिरितरा, यानि खलु वा एतासां प्रियाणि धामानि तानि कीतो न वेदेति, स संयत्ते संग्रामे छदिर्दर्शी, एताभिर्वेता अत्याह्वयिष्यामी,—तराभिरितरा, यतरत्र खलु वा एता अत्याहूयन्ते तत् पशवोऽभिसंक्रामन्ति, यत्र पशवस्तद्देवा, यत्र देवास्तदिन्द्रो, यतरान्वा एतेऽभिसंक्रामन्ति ते जयन्ति, जयति संग्रामम् ॥ ६ ॥ ४०

सा वै सृष्टाभयान् देवमनुष्यानन्वमन्यत, तां देवा दर्शपूर्णमासाभ्यामुपप्रास्तृणत, तां वा एतदाप्नुवन् यदिडां, तां वा एतदाप्त्वा हरन्तो मन्यन्ते यदिडामुपह्वयन्ते, यद्धि तूष्णीमुपह्वयेत तर्ह्येताः सप्त वृदेद्, यद्वचस्तद्वचराः सप्त, धाम धामासां वर्णं वर्णमुपगच्छ,—त्या ह वा एनमप्रतिख्यातं गच्छति य एवं वेद, यत्र स मूला ओषधीरुपगच्छेत् पशून् वा तदेता एव सप्त वदेद्, धाम धामासां वर्णं वर्णमुपगच्छ,—त्या ह वा एनमप्रतिख्यातं गच्छति य एवं वेद, सप्त स्थवीर्येण याजयेद्, यस्य सप्त स्थविराथर्वमामन्तमा स्यु,—र्वसीयस्येहि, श्रेयस्येही,—त्येतदेवदेवास्मा अत्याह्वयति, यो वैश्यः शूद्रो वा बहुपुष्टः स्यात्तस्य गवां नाम्नं

[३] मा श्रौ. ९,५,१।
[७] वा ३७,१२,२,२३ १० २५। काण्व ३७ १२ २ ४८ ११ २१। मा श्रौ ९ ५,१।

वत्सतरमुपमर्येत ॥ इलान्दाः स्थ ॥ इतीलान्दा हि पशवः पूष्णो नक्षत्रं पोषयिष्णु ॥ इति विश्वेषु वा एतच्चरति पूष्णो नक्षत्रं पोषयिष्णु, तदेवापधापयते, तमपाकुर्वीत ॥ आयुर्मे दा, वर्चो मे दा, रयिं मे दाः, पुष्टिं मे दाः ॥ इति रयिमेवास्य पुष्टिꣳ हरति, तमितोऽभिसृज्याधे-ऽतोऽत्याह्वयेद्, वसीयस्येहि, श्रेयस्येही,—त्येतदेतदेवास्या अत्याह्वयति, नास्य किंचनोदशिषद्, ग्रामकामꣳ याजयेत् सारस्वत ऋग्भ्याꣳ, सꣳवत्सरो वै सरस्वा,—न्त्सꣳवत्सरेणैवास्मै ग्रामं च्यावयति, वसीयस्येहि, श्रेयस्येही,—त्येतदेतदेवास्या अत्याह्वयति, पशुकामꣳ याजयेत् सारस्वत ऋग्भ्याꣳ, सꣳवत्सरो वै सरस्वा,—न्त्सꣳवत्सरेणैवास्मै पशूꣳश्च्यावयति, वसीयस्येहि, श्रेयस्येही,—त्येतदेतदेवास्मा अत्याह्वयति, सर्वासां दुग्धे चतुःशरावमोदनं पचेद् ब्राह्मणेभ्यः पशुकामो, यच्चतुःशरावो दिग्भ्य एवास्मै तेन पशूनवरुन्द्धे, यद् ब्राह्मणेभ्यो ब्रह्मणस्तेन, न छिन्नं देयं, पशुकाम इव ह्येषं, वासो हिरण्यꣳ वा देय,—मीजानस्यास्य पशवो भूयाꣳसो भवन्ति ॥ ७ ॥ ४१–४६

प्रजापतिर्वै न व्याहरत्, स आत्मन्येव पुण्यमायच्छ,—दात्मनः पुण्यं न निरवद,—देतद्ध तद्यजुर्वेदन्नान्यथा ब्रूयात् ॥ पुण्यं प्रशस्तम् ॥ इति ब्रूया,—दात्मन्येव पुण्यꣳ यच्छत्या,—त्मनः पुण्यं न निर्वदति, यामदानीयाय ददाति तामस्य पशवोऽन्वपक्रामन्ति, यदि मन्येता,—दानीयायादामित्येतदेव यजुर्वदे,—न्मे तदुपदम्भिषधृषिर्भ्रह्मा यद्दा इति, तदेवैतेनापूरयति, तदाप्याययति, समुद्र इव ह वा अस्य व्यच्यमानो न क्षीयते य एवꣳ वेद ॥ वीरवतीर्भूयास्त या नो वीरवतोऽकर्त ॥ इति पुमाꣳसं जातमभिमन्त्रयेत ॥ भूयसीर्भूयास्त या नो भूयसोऽकर्त ॥ इति स्त्रियं जाताम् ॥ अन्नादा भूयास्त ये नोऽन्नादानकर्त ॥ इति बलिहृतोऽभिमन्त्रयेत ॥ भूयाꣳसो भूयास्त ये नो भूयसोऽकर्त ॥ इति सभासदः, पादौ प्रत्यवहरे,—देते वै पशवा, उपोप ह वा एनं पशवो यन्ति नापयन्ति य एवꣳ वेद ॥ पुण्या पुण्यमस्थ,—चित्रा चित्रमस्थ,—इडा मे भगवोऽजनिष्ठा मैत्रावरुणं, ऊर्जा मे भगवः सह जनिष्ठाः, सꣳविदं मे विन्द ॥ इति पुमाꣳसं जातमभिमन्त्रयेतो,—र्जैवास्मै सह जायते, गच्छति पशूनाꣳ सꣳविदम् ॥ पुण्या पुण्यामस्थ,—चित्रा चित्रामस्थ,—इडा मे भगवत्यजनिष्ठा मैत्रावरुणी, रायस्पोषेण मे भगवती सह जनिष्ठा, ज्ञात्रं मे विन्द ॥ इति स्त्रियं जाताꣳ, रायस्पोषेणैवास्मै सह जायते, गच्छति पशूनां ज्ञात्रꣳ,

---

[ आयुर्मे दा० । अथर्व. २,१७,४ ]

[ ८ ] मा. श्रौ ९,५,२ ।

ये प्राचीनमेकाष्टकाया जायन्ते पूर्वस्य ते सस्यस्योत्तमा, ये प्रतीचीनमपरस्य ते सस्यस्य प्रथ-
मा,—स्तानुभयान्त्सहाभिमन्त्रयेतो,—भयानेनान्त्सहावरुन्द्धे ॥ ८ ॥ ४७-६१

यो वै शक्तिं वेद स तच् शक्नोति यच् शिक्षती,—यं वै शक्ति,—र्यो वा अस्यां भूयिष्ठ-
भाग्भवति स तच् शक्नोति यच् शिक्षति, भूयिष्ठभाग्घ वा अस्यां भवति य एवं वेद, पशवो
वै शक्ति,—र्यो वै पशूनां भूयिष्ठभाग्भवति स तच् शक्नोति यच् शिक्षति, भूयिष्ठभाग्घ वै पशुमान्
भवति य एवं वेद, तस्या व्रतं न ह्वले,—ति ब्रूयात् ॥ कुरुते, इति ब्रूया,—त्कान्तेर्ता,-
—ति ब्रूया,—द्विजन्या, इति ब्रूयाद्, भुवनमसि सहस्रमिन्द्राय त्वा सृमोऽददात् ॥ इति
सृमो वै नामासुर आसीत्, तस्येयं पृथिवी पशुभिः पूर्णासीत्, तामिन्द्रोऽवृङ्क्त, तस्मा-
दाहु,—रैन्द्राः पशव इति, यावतीनामिदं करोमि भूयसीनामुत्तरां समां क्रियासम् ॥ इति
गवां लक्ष्म कुर्याद्, भूयसीनामेवोत्तरां समां करोति, पशवो वै सृष्टा एकैकं नक्षत्रमुपाति-
ष्ठन्त, तेन प्राजायन्त, न भूमानमगच्छं,—स्ते रेवतीमुपातिष्ठन्त, रेवत्यां प्राजायन्त,
रेवत्यां भूमानमगच्छं,—स्तस्माद्यत्किंच पशूनां कुर्वीत तद्रेवत्यां कुर्वीतो,—प ह्येनं पशवस्तिष्ठन्ति,
प्रास्य पशवो भवन्ति य एवं वेद, यस्य दक्षिणतः प्रतिभिन्नं दक्षिणत उपाश्वरत्तत्पष्ठलक्ष्म
देवलक्ष्मं यज्ञियं यज्ञकामः कुर्वीतो,—प ह्येनं यज्ञो नमति, यस्योभयतः प्रतिभिन्नमुभयत
उपाश्वरत् तद्वायव्यं लक्ष्म पशव्यं पशुकामः कुर्वीत, पशुमान् भवति, यस्योभयतः प्रतिभि-
न्नमुभयत उपाश्वरत् तद् अङ्कुशं लक्ष्म एतस्य रूपं प्रतिष्ठाकामः कुर्वीत, गच्छति प्रतिष्ठां,
वसिष्ठस्य स्थूणाकर्ण्यो, वसिष्ठो वै रयिमपश्यत्, तामात्मन्नधत्त, यत्स्थूणाकर्णीः कुरुते
पशुष्वेव रयिं धत्ते, जमदग्नेः कर्करिकर्ण्यो, जमदग्निर्वै पुष्टिमपश्यत्, तामात्मन्नधत्त,
यत्कर्करिकर्णीः कुरुते पशुष्वेव पुष्टिं धत्ते, ऽसुराणां सास्नाकर्ण्यः, क्षिप्रं वृद्धिमेनन्निव क्षिप्रं
पराभवन्त्य,—नेष्याः कर्णाः, क्षिप्रं वृद्धिमेनन्ति, यज्ञस्त्वेनानन्नुपनमती,—न्निकृत्याः
छिद्रकर्ण्यो, यच्छिद्रकर्णीः कुर्वीत निर्ऋतिरस्य पशून्निगृह्णीया,—द्वे प्रजिन्या कर्ण्यः कारयी
न दात्राकर्ण्यः, पराचीनमिव हि तच्छिन्न,—मगस्त्यस्य विष्टाकर्ण्यः, कश्यपस्य कर्न्यनु-
स्ता, इन्द्रस्याकलस्ता, अथो आहुः, प्रजापते,—रित्युनयं ज्येष्ठलक्ष्मं ज्येष्ठ्यकामः कुर्वीत,
प्र समानानां ज्येष्ठ्यमाप्नोति, प्रजापतिः पशूनसृजत, स वा अमुमेव नामतनो,—ऽस्मा
एतत्, तदुग्रोऽसृक्तं, क्रूरं पशूनां कर्णा, इति वै नोऽसुरायाज्ञन, क्रूरं वा एतं पशूनां
कुरुते योऽस्जुते, यदक्षितास्तेनाक्षिता, अथ यदनक्षिता इति श्रूयन्ते तेनाक्षिता,—स्तदाहु,-

[१] मा. श्रौ. ९.५.३ ।

—न वा एतमेता अमुत्रागच्छन्ति या अनक्षिता इति, तस्मादक्षितꣳस्या, न तेजनेनाक्ष्णुयाद्,
वज्रो वै तेजनꣳ, यत्तेजनेनाक्ष्णुयाद्वज्रेण पशूनर्पये,—न श्यामिनायसा क्रूरं, तदशान्त,—मि-
क्षुकाण्डमप्सु वासयित्वा तेनाक्षितꣳस्या,—त्तद्धि शिवं, तच्छान्तं,—मथो आहु,—र्लोहितेना-
यसेति, तद्धि शिवं, तच्छान्तम् ॥ ९ ॥ ६२–६५

इह प्रजा विश्वरूपा रमन्तामस्मिन् गोष्ठे विश्वभृतो जनित्रीः ।
अग्निं कुलायमभि सꣳविशन्तीः समासृजन्तु पयसा घृतेन ॥ ६६

इति गाः सायमायतीरभिमन्त्रयेता,—ऽग्निर्वा एतासाꣳ योनि,—रग्निः कुलायꣳ, स्व एवैना
योनौ स्वे कुलाये सꣳवेशयति, नास्य पशवो नक्तमार्तिमार्छन्ति य एवꣳ वेद ॥ ६७

सꣳ वः सृजत्वर्यमा सं पूषा सं बृहस्पतिः । समिन्द्रो यो धनंजयः ॥ ६८

संजग्माना अबिभ्युषीरस्मिन् गोष्ठे पुरीषिणीः । स्वावेशा न आगत ॥ ६९

इति गाः सꣳसृजेद्या अस्य पुरा स्युर्याश्चान्यतो विन्देत, पशवो वै घृतं,—मयी रुद्रो,
यज्जुहुयाद्रुद्रायास्य पशूनपिदध्यात्, तस्मात्सꣳसृज्या एवा,—भयीर्हि, भूयसीर्भवन्ति, सꣳ वः
सृजत्वर्यमेति, यज्ञो वा अर्यमा, यज्ञेनैवैनाः सꣳसृजति, सं पूषेति, पुष्टिर्वै पूषा,
पुष्ट्यैवैनाः सꣳसृजति, सं बृहस्पतिरिति, ब्रह्म वै बृहस्पति,—र्ब्रह्मणैवैनाः सꣳसृजति,
समिन्द्रो यो धनंजय इती,—न्द्रियꣳ वा इन्द्र, इन्द्रियेणैवैनाः सꣳसृजति, रेवती तन्तिः
पृथिवी माता, रेवतीरापा ओषधयः ॥ ता नो हिन्वन्तु सातये धिये जुषे ॥ इति तन्तिꣳ वित-
नुयात्, तामनुमृज्यात् ॥ रय्या त्वा पुष्ट्यानुमार्ज्मि ॥ इति रय्यैवैनां पुष्ट्यानुमार्ष्टि, तस्या
एवं न रिक्ता स्या,—न्नोपर्युपरि संचरेयु,—र्नाभिवर्षेन्नाभितपे,—देतद्वै वत्सो रामकायनो विदां-
चकार तन्त्या विततनुꣳ, स सहस्रं पशून् प्राप, प्र सहस्रं पशूनाप्नोति य एवꣳ वेद ॥
७०–७४

पिता वत्सानां पतिरघ्न्यानामथो पिता महतां गर्गराणाम् ।
रेतोधां त्वा यशोधाꣳ रायस्पोषायोत्सृजे ॥ ७५

इत्यृषभस्य कर्ण उत्सृजमानो वदेद्, रेतोधामेवैनꣳ यशोधाꣳ रायस्पोषायोत्सृजते, यो

[ १० ] मा श्री ९,५,३ ।
[ सꣳ व· सृजत्वर्यमा० अथर्व ३,१४,२ । संजग्माना अबिभ्युषी० अथर्व. ३,१४,३ । पिता वत्सानां० आर्षे १४,२ ( प्र पा ) ९,४,४ ( पूर्वार्धः ) ]

वैश्यः शूद्रो वा बहुपुष्टः स्यात्तस्य गवां गोष्ठे द्वेकविंशती शकान्याहृत्यैकविंशतिमाहुतीर्जुहुया,-
—द्वेकविंशतिर्वै मनुष्यलोका, मनुष्यलोकेभ्य एवास्मै पशूनवरुन्द्ध, एतैरेव जुहुयाद्गोनामैरग्ने-
स्तया गोभिर्संदि पशुकामो, मुख्यं वा एतं पशूनां, मुखत एवास्मै पशून्निनयति ॥ १० ॥
७६

यासामिन्द्र उदाजत वसु नाम रूपं पशूनामुपसं धाम पश्यमानः ॥ तासामयं योनिरयं गोष्ठ इह रयिः पुष्टिः । स्वाहा ॥ इति जुहुयात् ॥ यासां बृहस्पतिरुदाजद्वेडा नाम रूपं पशूनां संगवं धाम पश्यमानः ॥ तासामयं योनिरयं गोष्ठ इह रयिः पुष्टिः । स्वाहा ॥ इति जुहुयात्॥ यासां मरुत उदाजन्त ज्योतिर्नाम रूपं पशूनां मध्यंदिनं धाम पश्यमानाः ॥ तासामयं योनिरयं गोष्ठ इह रयिः पुष्टिः । स्वाहा ॥ इति जुहुयात् ॥ यासां प्रजापतिरुदाजद्वायुर्नाम रूपं पशूनामपराह्णं धाम पश्यमानः ॥ तासामयं योनिरयं गोष्ठ इह रयिः पुष्टिः । स्वाहा ॥ इति जुहुया,-—देतानि वा अह्नो रूपाण्ये,—तेषु वा अह्नो रूपेषु देवाः पशूनां रूपाण्यवृञ्जत, तदेतेष्वेवाह्नो रूपेषु यजमानो भ्रातृव्यस्य पशून् वृङ्क्ते, घृतेन जुहोति, पशवो वै घृतं, पशुभिरेव पशून् वृङ्क्ते, तन्न दृश्यं, प्रातरेवान्तर्गोष्ठासु गोषु होतव्यं, सर्वा एनाः सहावरुन्द्ध, एतैरेव जुहुयाद्गोष्वाकृतासु, योनितो वा एतत् पशूनग्रही,—दपिहीनाः परिपरिणस्कृण्वन्त्ये,—तैरेव जुहुयात्संग्रामे, ऽधाश्वानभिमन्त्रयेत ॥ मित्रभृतः क्षत्रभृत ओजोभृतो बलभृतो वयं जयेम वयं सहेम, वयं भवेम, वयं पुषेम ॥ इति जयति संग्रामम् ॥ रोहिणीर्वो वृञ्जे गायत्रेण छन्दसा, ऽरुणा वो वृञ्जे त्रैष्टुभेन छन्दसा, गौरीर्वो वृञ्जे जागतेन छन्दसा, बभ्रवो वो वृञ्ज आनुष्टुभेन छन्दसा गर्भिण्यो वृञ्जे पाङ्क्तेन छन्दसा, रूपाणि वो वृञ्जे शाक्वरेण छन्दसा, सर्वान् वो वृञ्जेऽनुष्टुभेन छन्दसा, तत् सप्त, सप्तपदा शक्वरी, शाक्वराः पशवः, पशूनेवावरुन्द्धे, गायत्री प्रथमा; गायत्र्युत्तमा, तेजो वै गायत्री ब्रह्मवर्चसं, तेजसा च वा अस्मा एतद्
ब्रह्मवर्चसेन चोभयतः पशून् परिगृह्णाति ॥ ११ ॥
७७-९१

प्रजापतिर्वै त्रीन्महिम्नोऽसृजताग्निं वायुं सूर्यं, ते चत्वारः पितापुत्राः समगच्छन्त, ते स्वेदं समरोधन्,—स्तदभवन्, तद्वा अस्यैतन्नामाभूदिति, मर्मेमभूदिति, तद्वा अस्यैते नामनी क्रूरे अशान्ते, तस्मादेते न ग्रहीतव्ये, क्रूरे ह्येते अशान्ते, प्रजापतिर्वै स्वां दुहितरमभ्यकामयतोषसं, सा गौर्हिदभवत्, तामृष्यो भूत्वाभ्यैत्. तस्मा अव-

व्रतमच्छदयत्, तमायतयाभिपर्यावर्तत, तस्माद्वा अबिभेत्, सोऽब्रवीत्, पशूनां त्वा पतिं करोम्यथ मे मा स्था इति, तद्वा अस्यैतन्नाम पशुपतिरिति, तमभ्यायत्याविध्यत्, सोऽरोदीत्, तद्वा अस्यैतन्नाम रुद्र इति, ते वा अस्यैते नामनी शिवे शान्ते, तस्मादेते कामं ग्रहीतव्ये, शिवे ह्येते शान्ते, ततो यत् प्रथमꣳ रेतः परापतत् तदग्निना पर्यैन्द्ध, तदासामन्यारत्वं, ततो यदुत्तरमनुवर्तद् बृहस्पतिस्तत् प्रागृह्णात्, तदासामुस्रियात्वं,—मनुकामेति, तदासाꣳ शक्वरीत्वं, गातुमविदामेति, तदासां गोत्वं,—मेतानि वा आसां नामानि, सर्वैरेवासां नामभिः सर्वैः कामैर्भुङ्क्ते य एवꣳ वेद, पशवो वै सुता एतानि नक्षत्राण्यन्वपाक्रामन् पौर्णमासीमष्टकाममावास्यां चित्रामश्वत्थं, तस्मात्तेषु गार्नीपाकुर्यात्, यामपाकुर्यात्तामस्य पशवोऽन्वपक्रामेयुः ॥ १२ ॥ १२

देवा वै सत्रꣳ सहान्तर्वन्तोऽभवꣳस्ते सर्वे सह व्यजायन्त, तदेकनूदश्यत सꣳहतं, तद्देवा इत्थं चेत्थं च व्यत्यचरꣳस्तन्मित्रावरुणा अचायताꣳ, स्याद्वै य एनद्विकुर्यादिति, तद्वा द्विपदीमकुरुताꣳ, सा न प्रत्यतिष्ठत्, तस्या अन्यत आहृत्येमौ प्रत्यधत्ता, तस्माद्देवा अनद्धा अस्थ,—न्सा चतुष्पदी भूत्वा प्रत्यतिष्ठत्, प्रति प्रजया च पशुभिश्च तिष्ठति य एवꣳ वेद, तस्याꣳ वै पयः पर्यपश्यꣳस्तां देवा अदुह हरितेन पात्रेण यज्ञं चामृतं च, दुहे यज्ञं चामृतं च य एवꣳ वेदा,—ऽथ पितरोऽदुह रजतेन पात्रेणोर्जं च स्वधां च, दुह ऊर्जं च स्वधां च य एवꣳ वेदा,—ऽथ मनुष्या अदुह दारुपात्रेणान्नं च प्रजां च, दुहेऽन्नं च प्रजां च य एवꣳ वेदा,—था ऋषयोऽदुह चमसेन छन्दाꣳसि च पशूꣳश्च, दुहे छन्दाꣳसि च पशूꣳश्च य एवꣳ वेदा,—ऽथ गन्धर्वाप्सरसोऽदुह पुष्करपर्णेन पुण्यं गन्धं, दुहे पुण्यं गन्धꣳ य एवꣳ वेदा,—ऽथ सर्पा अदुहालाबुना विषं, दुहे भ्रातृव्याय विषꣳ य एवꣳ वेदा,—ऽथासुरा अदुहायस्पात्रेण सत्रवां भूतिं च पराभूतिं च, दुहे भ्रातृव्यायाभूतिं च पराभूतिं च य एवꣳ वेद, ताꣳ वा इन्द्रोऽनयैवोपासीदत्तं,—दꣳ सर्वमदुहद्यदिदं किंच, तां दुग्ध्वा प्रत्यनुदत, सा प्रतिनुत्ता कुमना अतिष्ठद् ध्यायन्ती, तां प्रजापतिरचायद्, ध्यायसि वा इति, सोऽब्रवीत्, किं ध्यायसीति, साब्रवीद्, ये माधुक्षत ते मा प्रत्यनुदन्तेति, सोऽब्रवी,—न्मा शुक्षं,—स्तथा वै त्वा कर्ष्यामि यथोभयेषां देवमनुष्याणां प्रिया भविष्यसीति, तस्या घृतं पद्भ्योऽक्षरत्, तस्य घृतस्यादाय मुखꣳ न्यमार्ट्॥ उभयेषां त्वा देवमनुष्याणां प्रियां करोमि ॥ इति तस्मादुभयेषां देवमनुष्याणां प्रियं,—तेनैव श्रोत्रियस्य मुखꣳ विमृज्या,—दुभये ह्येते देवमनुष्या विदु,—रेतेन

कुमार्या, एतेन पतिकामाया, एतद्वै गोवर्चसं न सर्वस्मा इव कुर्याद्, यस्मै तु कुर्यात्
तेजस्वी स्यात् ॥ १३ ॥ ९३-९५
यो ललामः शितिपाच्छितिककुच्छितिभसच्छितिवालः, साशारिः सामुक्ताऽस्यूथा,
प्राप्तो यूथान्याप्नोति यस्य तादृङ्ङृषभो भवति, यस्य वालतूपः प्रतिष्ठितः सा प्रतिष्ठिता,
प्रति प्रजया च पशुभिश्च तिष्ठति यस्य तादृङ्ङृषभो भवति, यः समन्तः शितिबाहुः सा
समन्ता, समन्तः प्रजया च पशुभिश्च भवति यस्य तादृङ्ङृषभो भवति, यः शितिपृष्ठः
सा तन्तिः, पशुमान् भवति यस्य तादृङ्ङृषभो भवत्य,—थ यस्यैकरूपस्य सतो लक्ष्म
भवति सोदारसू,—र्नास्यामित्रो गा विधावति यस्य तादृङ्ङृषभो भवति, याजलोम्नी गो
पोपयिष्णु,—र्जा इव प्रजायन्ते यस्य तादृङ्ङृषभो भवति, या श्यामा सा पोपयिष्णुः,
क्षिप्रं वृद्धीर्भवन्त्यपनिपादुकास्तु, यारुणा सा पोपयिष्णुः, क्षिप्रं वृद्धीर्भवन्ति हिमेरवस्तु,
या श्वेता सा पोपयिष्णुः, क्षिप्रं वृद्धीर्भवन्ति दुर्धर्माणस्तु, नाङ्गिः काश्यौ न पृश्नि,—रमि-
थुनं त,—दथो व्याघ्ररूपं वै पृश्नि,—र्निभ्यत्यस्मात् पशवः, कनीयाꣳसोऽस्य पशवो भवन्ति
यस्य तादृङ्ङृषभो भवति, तदाहु,—र्बीजमेवोत्सृज्यमित्ये,—तद्वा आसां बीजꣳ यद्रोहितꣳ
रूपं, पशुमान् भवति यस्य तादृङ्ङृषभो भवति, यो धूम्रस्ताम्रधूम्रः स प्रजापतिः, प्र प्रजया
च पशुभिश्च जायते यस्य तादृङ्ङृषभो भवति, यस्य लोमशौ ककुत्सं स्तम्बा, स्तम्बीव
प्रजया च पशुभिश्च भवति यस्य तादृङ्ङृषभो भवति, यस्योर्ध्वौ श्रृङ्गौ ऊर्ध्वा आप्यायन्त
ऊर्ध्वा अस्य पशव आप्यायन्ते यस्य तादृङ्ङृषभो भवति, यस्य दक्षिणतः पक्षꣳ सा पापी
सा स्तेनन्त्य,—थ यस्य सव्यत उन्नतꣳ सा पुण्या सोपाहरन्ती, या उत्सृष्टिस्ता ऊर्ध्वा आप्या-
यन्त, ऊर्ध्वा अस्य पशव आप्यायन्ते यस्य तादृङ्ङृषभो भवति, यस्य सव्यतः पक्षꣳ सा
पापी सा स्तेनन्त्य,—थ यस्य दक्षिणत उन्नतꣳ सा पुण्या सोपाहरन्ती, या सव्यसाचिनी सा
पुण्या सोपाहरन्ती, या सꣳशृङ्गी सा गोष्ठं,—स्तां न प्रछिन्द्यादनुसृष्टस्य गोषु स्यादा,—मेवा
वै पशूनामेस्कृतꣳ हवि,—रस्कृतमस्य हविर्भवति यस्यानुसृष्टिर्गोषु भवत्य,—धा चास्य रेवन्
गोषु स्यादा,—मेवा वै पशूनामूर्जं बिभ्रती, ऽधोधुरा अस्य पशवो भवन्ति यस्योधा न रेवन्
गोषु भवतः ॥ १४ ॥ ९६ [१८१]

॥ इति खिलकाण्डे गोनामिको द्वितीयः प्रपाठकः ॥ २ ॥

